॥ श्रीः ॥

व्याकरणग्रन्थरत्नावल्याः पञ्चमं रत्नम्.

प्रथमो] # ॥ चन्द्रिका ॥ [भागः.

शब्देन्दुशेखरव्याख्या

श्रीराघवेन्द्राचार्येण 50

विरचिता

'अभिनवभट्टबाणशब्दतर्कालंकारविद्याभूषणेन'

वात्स्यचक्रवर्तिना

रायंपट्टै. कृष्णमाचार्येण

संपाद्य संशोध्य

तैञ्जानगरस्थ

श्रीकृष्णविलासमुद्रालये

मुद्रिता

१९१२.



मूल्यम्] [द्वादश कलाः.

# ॥ विज्ञापना ॥

महाशयाः, न खलु श्रीमतां संनिधौ शब्देन्दुशेखरव्याख्यायाश्चन्द्रिकाया असाधारणः समुत्कर्षो मितंपचमतिभिरस्माभिर्विनिवेदनीयो भवति। ग्रन्थकार एव खलु विषमीमात्मीयां स्वकृतचन्द्रिकायाः संक्षेपरूपामभिधत्ते। चिरादेव आ-संज्ञाप्रकरणमासादितापीयमुपरितनं भागमाप्तुकामैरनेकधा प्रयतमानैरस्माभिरेताव-दवधि न मुद्रणपथमुपनीता। हन्त नास्माकं मनोरथः फलितः। ग्रन्थकर्तृप्रपौत्रैः पण्डितवरेण्यैः सतारानगरालंकारैरस्मत्प्रियसुहृन्मणिभिः गजेन्द्रगडकर श्रीबाला-चार्यमहाशयैरेव संज्ञाप्रकरणपर्यन्तमेव चन्द्रिकां प्रेषयद्भिः 'ग्रन्थकर्तुः काल एव केनापि छात्रेण चन्द्रिकामपहृत्य पलायितमित्यस्मद्गृहे वार्ता। अस्मत्पितृचरणैर्बहु प्रयस्यद्भिरपि नासादिता संपूर्णा चन्द्रिका। अविच्छेदेन संज्ञाप्रकरणमेव विद्यते। तदेव संप्रति प्रहीयते। उपरि च क्वचित्क्वचिद्विच्छेदेन किंचित्किंचिदिव लभ्यते' इति विलिखितम्। संपूर्णस्य पुस्तकस्यालाभेऽपि, संप्रति विद्यमानोऽपि भागः कालेन विलयं न यात्वित्यालोच्य, मूलस्येव व्याख्यानस्याप्यस्य संज्ञाप्रकरण एव प्रौढिमेति च वृद्धवैयाकरणमुखादवगत्य, प्रथमभागतया चन्द्रिकायाः संज्ञाप्रकरणं प्रकटितमस्माभिः। ग्रन्थसंपादनपरिश्रमाभिज्ञाः प्राचीनग्रन्थप्रकटनकुतुकिनो गुण-मात्रग्राहिणः पण्डितमहाशया एतावतापि तुष्येयुरिति विश्वसिमः।

श्रीमुनित्रयमन्दिरम्.
तिरुवादि.
२३—८—१९११.

इति
सहृदयविधेयः
रा. च. वि. कृष्णमाचार्यः।



॥ श्रीः ॥

# श्रीराघवेन्द्राचार्यविरचिता

## लघुशब्देन्दुशेखरव्याख्या

# ॥ चन्द्रिका ॥



पाणिनिवररुचिशेषान्नत्वा शब्देन्दुशेखरव्याख्याम् ।
वितनोमि चन्द्रिकाख्यां परिभाव्याशेषशेषार्थान् ॥ १ ॥

नानाक्षेपान्समुद्धर्तुं विद्वत्कल्पैरनुद्धृतान् ।
समर्पयन्मुकुन्दस्य पादयोर्युगले यते ॥ २ ॥

पातञ्जल इति । महाभाष्ये जले पातं कृत्वा तनुत इत्यपि केचित् ॥ सतीदेव्या इति । सतीशब्दस्य पातिव्रत्यनिमित्तकस्य नित्यस्त्रीत्वान्न पुंवत्त्वम् । सतीं पार्वतीं पातिव्रत्येन विजिगीषत इत्यपि केचित् ॥ अरिकक्षेति । 'कक्षस्तु दोर्मूले शुष्ककानने' इति त्रिकाण्डशेषः ॥ तनुत इति । अनेकजनसंबद्धं करोतीत्यर्थः ॥ अर्थप्रकाशकमिति । पुरुषार्थप्रकाशकत्वं फणीशे, ग्रन्थे तु सिद्धान्तप्रकाशकत्वम् ॥ मनोरमेति । मनोरमैव उमा अर्धदेहो यस्येति विग्रहः । एतेन तस्या गौणत्वमनुपसृष्टत्वं च सूचितम् । शब्द एव इन्दुः शेखरः शिरोभूषणं यस्येति विग्रहः; लघुः शब्देन्दुः शेखरो यस्येति विग्रहो वा । यत्तु—

उमार्धदेहमिति षष्ठीतत्पुरुष इति; तन्न, फणीशाभेदानुपपादकत्वात् पुरुषे स्त्र्यर्धदेहत्वप्रतिपादनस्यानुचितत्वाच्च। मनोरमैवोमा इत्यादिविग्रहेण शिवप्रतिपादकत्वमिति तु न, तनुत इत्यनेनानन्वयात् ॥ समुचितेति। तत्त्वं चैतच्छास्त्रप्रवर्तकसंबन्धित्वेन। प्रवृत्त्यनुद्देश्यत्वमनुषङ्गः ॥ तिरस्कृत्येति। परिभावशब्दाण्णिजन्तात् ल्यबिति बोध्यम्, न तु भुवो णिजन्तात् ल्यबिति। यद्वा निवृत्तप्रेषणात् भुवो णिच् ॥ तेनेति। अन्यतरार्थाश्रयणेनेत्यर्थः; न त्वर्थद्वयाश्रयणेनेति, वाशब्देन युगपदुभयानाश्रयणसूचनात् ॥ अगतार्थतेति। तिरस्कारस्य एताभ्यां विना असंभवात्, मुनित्रयोक्तिविचारपूर्वकत्वस्य स्वग्रन्थे उक्तेः 'देवदत्तो वामेनाक्ष्णा पश्यति' इति न्यायेन प्राचीनग्रन्थानामविचारपूर्वकत्वबोधनद्वारा तेनास्यागतार्थत्वस्य समूलत्वस्य चोपपादकत्वादन्यतरार्थेन एतयोर्ध्वननमिति भावः ॥ सिद्धान्तज्ञान इति। गोषु धोक्ष्यमाणास्वित्यादाविव सप्तमी। **अइउण्।** ननु 'संज्ञा च परिभाषा च' इत्यादिना सूत्राणां षड्विधत्वोक्त्या सप्तमप्रकाराभावात् कथमेतेषां सूत्रत्वमत आह— वृत्तिपरिच्छेदकत्वेनेति। वृत्तिग्रहतात्पर्यकत्वेनेत्यर्थः। नन्वेषां क्रमबोधतात्पर्यकत्वेन तदसिद्धमत आह— क्रमस्येति। तथा क्रमबोधतात्पर्यकत्वं शक्तिग्रहतात्पर्यकत्वं विना अनुपपन्नमिति तदप्यङ्गीकार्यमिति भावः। तुल्यन्यायादाह— स्वौजसिति। वस्तुतस्तु शक्तिग्रहमात्रतात्पर्यकत्वं तत्त्वमिति नास्य संज्ञासूत्रत्वम्। यद्वा यथाश्रुतं शक्तिग्रहतात्पर्यकत्वमेव संज्ञासूत्रत्वम्। 'अ इ उण्' इत्यादीनां तात्पर्यविषयस्य क्रमस्य संज्ञाद्वारैवोपयोगेन शास्त्रान्तरैकवाक्यतया शक्तिपरिच्छेदतात्पर्यकत्वकल्पनायामपि एतत्तात्पर्यविषयस्यादिविधेरतथात्वात्तत्र तात्पर्यकल्पने मानाभावः। सुबादिपदशक्तिग्रहस्तु अस्यानुषङ्गिकं फलम्। वृत्तिपरिच्छेदकत्वेनेत्यस्य वृत्तिग्रहप्रयोजकत्वेनेति तु नार्थः, तद्धितविधायकानामपि 'यचि भम्' इत्याद्येकवाक्यतया संज्ञासूत्रत्वापत्तेः ॥ संहिताया अविवक्षयेति। संहिताकार्यकरणे अभिमतनिर्देशानापत्त्या तदविवक्षयेति क्वचित्पाठः। 'वाक्ये तु सा विवक्षा' इत्यत्र वाक्यपदमुक्तत्रितयातिरिक्तपरमिति भावः ॥ अनुकरणत्वेनेति। अभेदविवक्षयेति

भावः । स्वमते तदभावादाह— सौत्रत्वाच्चेति । 'छन्दोवत्सूत्राणि' इति च्छन्दस्त्वातिदेशादिति भावः । 'स्वरसंधिस्तु न प्रवर्तते, वर्णोपदेशकाले अजादिसंज्ञानामनिष्पादात्' इति कैयटस्य, बोद्धॄणां क्रमेण साधुत्वग्रहेऽपि परिनिष्ठितशब्दोच्चारणस्य न्याय्यत्वात् 'तुल्यास्यप्रयत्नम्—' इत्यादाविव संधिकार्यघटितस्योच्चारणं न्याय्यमित्यजादिसंज्ञाद्यनिष्पादस्य साक्षात्स्वरसंध्यप्रवृत्तावहेतुत्वमित्यभिप्रेत्य दीक्षितैर्दूषितस्य अजादिसंज्ञाद्यनिष्पादस्य उपजीव्यविरोधोपपादकत्वेन तद्द्वारैव संधिकार्याप्रवर्तकत्वमिति रत्नाकरकृतमुज्जीवनमनुवदति— यत्त्विति । तदप्रवृत्तावित्यस्य अविकृताकारादिषु शक्तिग्रहे हेतूपपादकत्वं बोध्यम् ॥ पश्चादिति । शक्तिग्रहोत्तरमित्यर्थः । तदेव विवृणोति— प्रत्याहारे जात इति । अतो नासंगतिः । विरुध्येतेति । स्वविरोध्यर्थान्तरेण विहन्येतेत्यर्थः; मध्यगत्वतात्पर्यविषयस्यैव 'आदिरन्त्येन—' इत्यनेन अजादिपदशक्यत्वबोधनात्स्वस्य च प्रकृतावेव वाच्यत्वात् युगपदनेकेषां चैकस्थानसमावेशार्हाणामेकसमुदायघटकत्वायोगात्पूर्वगृहीतशक्त्युपमर्देनैवार्थान्तरे शक्तिग्रहस्य वाच्यतया स्वविरोधिसंनिपातेन स्वोपमर्दः स्पष्ट एवेति भावः । अर्थान्तरे शक्तिग्रहमाशङ्क्य तदभावमाह— न हीति ॥ अर्थान्तरेति । अविकृताकारादिषु शक्त्यनुभवजन्योद्बुद्धसंस्कारजन्या स्मृतिरेव अर्थान्तरे शक्तिग्रहप्रतिबन्धिकेति भावः । संस्कारस्य कदाचिदनुद्बुद्धौ स्वोपजीव्याजादिपदनिर्णयविरोधिनः संदेहस्यावश्यकतया तत्संपादकत्वं स्वस्योपजीव्यविरोधान्न युक्तमित्याशङ्कते— न चेति ॥ व्याख्यानत इति । संदेहस्य हितैष्याचार्यवचनजन्यनिर्णयेनानुत्पत्तेरिति भावः । अत्र च पूर्वपक्षिसिद्धान्तिनोः 'यतोऽनावः' इत्यत्रेव उपजीव्यविरोधो विवक्षितः, न तु संनिपातपरिभाषाविरोधः; तत्र हि 'हल्स्वरप्राप्तौ—' इत्यस्याभावे व्यञ्जनस्वरमाशङ्क्य स्वोपजीव्यद्वयच्कताविरोधित्र्यच्कतासंपादनेन उपजीव्यविरोध इत्युक्तमाकरे । केचित्तु— वाक्यार्थज्ञानस्य स्वोपजीव्याप्रामाण्यशङ्काऽकलङ्कितशक्तिग्रहविरोध्यप्रामाण्यशङ्कासंपादकत्वेन संनिपातपरिभाषाविरोध इत्याहुः । यद्यपि 'तुल्यास्यप्रयत्नम्' इत्यादाविव बोद्धा क्रमेण साधुत्वस्य ग्रहेऽपि आचार्येण

परिनिष्ठितस्योच्चारणमिव प्रकृतेऽपि कृतसंधिकमेवोच्चारणीयमिति शङ्कायां नास्य समाधानस्यावसरः, अविकृताकारादिष्वजादिपदशक्तिग्रहस्यानुपजीव्यत्वात्; तथापि संहिताकार्यकरणे संदेहापत्त्या अकृतसंधिकोच्चारणमेव न्याय्यमिति मनसिकृत्य तस्य अपरिनिष्ठितत्वशङ्कैवात्र निराक्रियत इति न दोषः। वस्तुतस्तु— अविकृताकारादिश्रवणमुपजीव्य जातस्य अजादिपदशक्तिग्रहस्य तद्विघातकसंधिकार्याप्रवर्तकत्वमित्येवं संनिपातपरिभाषाविरोधः पूर्वपक्षिणोऽभिमतः, 'न हि संधिकार्ये कृते—' इति ग्रन्थस्वरसात्। न च तदनुसंधानमेव शक्तिग्रहे उपजीव्यमिति न तद्विरोध इति वाच्यम्, रामायेत्यादावपि तदप्रवृत्तिप्रसङ्गात्। न च रामायेत्यादौ ह्रस्वाकारश्रुतिरेवोपजीव्या; प्रकृते तु मध्यगसदृशानामेव संज्ञितया तच्छ्रुतिरेवोपजीव्या न तु मध्यगानामिति वाच्यम्, तथा सति 'लोपश्च बलवत्तरः' इति भाष्यासंगतेः मध्यगस्य लोपेनापहारेऽपि तत्सदृशस्य संज्ञिनोऽनपहारात्। अथानुबन्धानां लोपेनापहारे मध्यगत्वाभावेन न तत्सदृशस्य संज्ञित्वमिति चेत्, तर्हि संधावपि न मध्यगत्वमित्युपजीव्यविरोधतादवस्थ्यम्। तस्मात्कैयटोज्जीवनं रत्नाकरकृतं सम्यगेवेति वयं प्रतीमः॥ आम्नायेति। इदं दृष्टान्तार्थम्॥ एवं चेति। माहेश्वरत्वस्य काठकादिव्यवहारवत्तदकर्तृकत्वेऽपि उपपत्तौ अप्रसिद्धकर्तृकत्वेन श्रुतित्वं सिद्धमिति भावः॥ अस्यैवेति। व्याकरणस्यैवेत्यर्थः, न तु पाणिनिप्रणीतस्यैवेति। नन्वेषां माहेश्वरत्वे लण्सूत्रस्थभाष्यविरोध इत्यत आह— आचार्यपदेनेति॥ प्रत्याख्यानपरमिति। 'किमर्थमिमावुभौ' इत्युपक्रमस्थमित्यर्थः॥ प्रत्याख्यानस्यापीति। न केवलम्, माहेश्वरन्यासप्रत्याख्यानस्यापीत्यर्थः॥ सामर्थ्येति। आचार्यतपोबलादित्यर्थः। ननु वृद्धिसूत्रस्थम् 'वर्णेनाप्यनर्थकेन न भवितव्यम्' इति भाष्यमुपक्रमादिपर्यालोचनया दृष्टप्रयोजनशून्येनेत्येवं व्याख्येयम्; तथा चासंगतिरित्याह— वृद्धीति॥ अत एवेति। वेदत्वादेवेत्यर्थः॥ चन्द्रतारकवदिति। समाहारद्वन्द्वाद्वतिः॥ अव्युच्छिन्नमिति। शरीरिकर्तृकत्वेनापरिच्छिन्नमित्यर्थः॥ आधुनिकः कर्तेति। आधुनिकेति विशेषणं चन्द्रतारकस्येश्वरकर्तृकत्वात्॥ उद्धर्तुकाम इति। उद्धारश्च

दुःखनिवृत्त्यनुकूलो व्यापारः ॥ सर्वत्र सूत्रेष्विति । इदं पूर्वान्वयि । तथा च सर्वसूत्रविषये विमर्शे विचारे क्रियमाणे सति एतत् ढक्कानिनादाभिव्यक्तं शिवसूत्रजालं कल्याणसूत्रसमुदायो बभूवेत्यर्थः ॥ अन्त्यवर्णचतुर्दशेति । अत्र शिवसूत्रजालमिति संबध्यते । अन्त्या वर्णाश्चतुर्दश यत्रेति बहुव्रीहिः । एवं च अन्त्यवर्णचतुर्दश शिवसूत्रजालं धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये भवतीत्यर्थः । अत्र शिखी ध्वस्त इतिवत् चतुर्दशवर्णेष्वेव तात्पर्यम्; तेन 'अत एव' इत्युत्तरग्रन्थसंगतिः । अथ वा एतत् उद्धृतवर्णात्मकमाद्यमतिरहस्यं शिवप्रसादलब्धसूत्रसमूहरूपम् अहं नन्दिकेश्वरः विमर्शे विचार्य स्फुटीकरोमीत्यर्थः । आर्षस्तङ् गुणश्च । अत्रेत्याद्युत्तरान्वयि ॥ अन्त्यवर्णचतुर्दशमिति पाठे अन्त्या वर्णाश्चतुर्दश यस्मिन् समूहरूपे तत् णादिलान्तानुबन्धसमूहरूपम् । 'अच्' इति योगविभागात्समासान्तः । यद्वा अन्त्यो वर्णः चतुर्दशः चतुर्दशत्वसंख्यापूरको यस्मिंस्तदन्त्यवर्णचतुर्दशम् । 'अन्त्या वर्णाश्चतुर्दश । धात्वर्थं समुपादिष्टाः' इत्यपि क्वचित्पाठः । समुपादिष्टं सम्यक् यथोचितम् उप तत्समीपे कृत्वा आ समन्तात् कथितम् । तावन्मात्रेण सनकादीष्टसिद्धावपि पाणिनेस्तदभावादाह— पाणिन्यादीति । आदिना शाकटायनपरिग्रहः । 'सर्वं नाम धातुजमाह' इत्युक्तेराह— धातुमूलकेति ॥ अनादित्वमिति । अइउण्सूत्रस्थः 'सूत्रकारो महेश्वरः' इति स्वग्रन्थस्तु सूत्रोपदेशकर्त्रर्थकः । आधुनिक इति तु चन्द्रतारकादीनां सकर्तृकत्वस्य श्रुतिसिद्धत्वात्साधारणधर्मघटनार्थमिति दिक् । नन्वेवमुपदेशव्यवहारेण तस्य चाज्ञातज्ञापनविषयत्वेन वर्णानामपि सादित्वापत्त्या उक्तार्थासंगतिरेवात आह— मन्त्रोपदेश इति । तथा च सिद्धोच्चारणेऽपि तद्व्यवहारान्न तदसंगतिः । यद्वा ननु 'उपदेशः कर्तव्यः' इत्युक्त्या आधुनिकत्वमत आह— मन्त्रोपदेश इति । अत एव 'क उपदेशः? उच्चारणम्' इत्याद्येव भाष्ये उक्तम्, न त्वाद्योच्चारणमिति । उच्चारणमित्यस्य ढक्कानादेनाभिव्यक्तिरित्यर्थः ॥ उपपादितमिति । 'आदिरन्त्येन—' इत्येकवाक्यतयेति भावः ॥

परपक्षदूषणं हि बाधकसाधकभावाभावाभ्याम्; तत्र साधकाभावस्य स्फुटत्वात् बाधकमुद्भिभावयिषुः प्रथममनुनासिकत्वे पाणिन्यसंमतिं दर्शयति— अस्येत्यादिना ॥ अस्य कृत्स्नस्य ग्रन्थस्य अनुनासिकत्वे मुनित्रयासंमतिप्रदर्शनद्वारा अप्रामाणिकत्वप्रदर्शने तात्पर्यम्, 'अनुनासिकत्वमप्रामाणिकम्' इत्युपसंहारात् ॥ लकारमिति । न च तदनित्यत्वज्ञापनार्थमिति वाच्यम्, एतत्प्रत्याहारस्याद्याप्यसिद्धत्वेन तदनित्यत्वज्ञापनायोगात् अनुवाद्ये विधेये च प्राचां मते निरनुनासिकस्यैवोच्चारणेन तदनित्यत्वज्ञापने फलाभावाच्च । 'यणो मयः' इति वार्तिके विनिगमनाविरहमूलकं विकल्पं फलमभिसंधायाह— सूत्रेष्विति । 'इणो यण्' इत्यादौ लाघवाभावादाह— बहुष्विति । 'यण्वतः' 'यणादि परम्' इत्यादिषु कतिपयेषु सूत्रेष्वित्यर्थः । भाष्यवार्तिकयोरसंमतिमाह— किंचेत्यादिना ॥ अव्यापकत्वापत्तिरिति । अनुबन्धग्रहणशङ्काऽव्यापकत्वेत्यर्थः । नन्वच्प्रत्याहारे ग्रहणशङ्कायामेव एतस्य परिहारस्याभिधानान्नैतदव्यापकत्वं दोष इति चेत्, न; सूत्रचतुष्टयमात्रविषयकत्वे तत्रैवास्य विचारस्य कर्तव्यतया तत्परिहाय हयवरट्सूत्रे तत्करणेन प्रत्याहारानुबन्धमात्रविषयकत्वावगमात् । 'अज्ग्रहणेषु' इत्युक्तिस्तु हल्ग्रहणेष्वसाधारणस्फुटतरपरिहारान्तरसद्भावेन । यद्वा अज्हलोः शङ्कापरिहारयोस्तौल्येऽपि अन्यतरोपादानस्य स्फुटतरासाधारणपरिहारान्तरासत्त्वस्थलीयशङ्काविषयकत्वसूचकत्वात् उत्सर्गतः प्राप्तस्य तद्व्यापकत्वस्य भङ्ग इति । अस्मिन्पक्षे भाष्यवार्तिकयोः 'अज्ग्रहणेषु' इत्युक्तिः, सूत्रचतुष्टयोपादानं च तादृशशङ्कास्थलमेतदेवेति प्रदर्शयितुम् । तेन वशादिप्रत्याहारेष्वेतस्याव्यापकत्वेऽपि न क्षतिः । यद्वा अव्यापकत्वापत्तिरित्यस्य परिहारद्वयाव्यापकत्वापत्तिरित्यर्थः । ननु हल्प्रत्याहारे अनुनासिकाकारस्य ग्रहणेऽपि न दोषः; ग्राहकशास्त्रघटकाण्पदशक्तिग्रहकाले इत्संज्ञालोपाभ्यां तदपहारादण्पदेनाग्रहणादित्यत आह— प्रत्याहारेष्विति । अव्यापकत्वे को दोष इत्यत आह— मामानिति । अनितेः क्विपि 'अनुनासिकस्य—' इति दीर्घे संबुद्धौ रूपमिदम् ॥ अनुनासिकपक्षे इति । ननु जातिग्रहणपक्षस्यैवादृतत्वात्कथमिदमिति

चेत्, न; तत्पक्षेऽपि नासिकाव्यापाराभावलाघवेन निरनुनासिक एवोच्चारयितव्ये सानुनासिकोच्चारणेन 'उँ' इत्यत्रैव तद्विवक्षेत्याशयात् । यत्तु— 'मोऽनुस्वारः' इत्यत्र हल्पदम् अजभावपरम्, 'स्वरे मः' इति पूर्वव्याकरणानुरोधादिति परिजहुः, तन्न; एवमपि भो यांस्त्रायस्वेत्यत्र 'हलि सर्वेषाम्' इति लोपापत्तेः । अनुनासिकोच्चारणस्येत्संज्ञापरिक्षीणतया न विवक्षाहेतुत्वमित्यभिप्रेत्याह— सोऽस्तीति । प्रत्याहार इत्यस्यावृत्तिमभिप्रेत्याह— वर्णसमाम्नायेति । इदमधिकरणसप्तम्यन्तमक्षिवत्यनेनान्वेति । लण्सूत्रस्थाकारे आद्यपरिहारद्वयसत्त्व एव तृतीयस्याव्यापकत्वसंभवेन आद्यतृतीययोः समविषयतया तृतीयस्य द्वितीयापेक्षयैवाधिकदेशवृत्तित्वरूपव्यापकत्वस्य वाच्यतया चाद्यं परिहाय किंचेत्यादिग्रन्थानूदितं द्वितीयं विवृणोति— तत्रेत्यादिना । तत्रेत्यस्य द्वितीयहेतुशरीरघटक इत्यर्थः । ननु 'सोऽचि लोपः' इति निर्देशेन अप्राधान्येन चाकारस्य हल्प्रत्याहाराप्रवेशसंभवान्न पूर्वोक्तदोष इति चेत्, भ्रान्तोऽसि, यतो न वयं मामानित्यादिदोषस्य सर्वथा अपरिहार्यत्वं ब्रूमः, किं तु उक्तरीत्या आद्यद्वितीययोः सत्त्वेन तृतीयस्य चासत्त्वेनाव्यापकतां ब्रूमः । प्रत्याहारेषु अनुबन्धग्रहणमाशङ्क्य एतान् त्रीन्परिहारानभिधाय मध्ये च परिहारान्तरमभिधाय तद्दूषयित्वा 'तस्मात्पूर्वोक्त एव परिहारः' इति वदता भाष्यकृता च व्यापकत्वमसूचि, अव्यवहितपूर्वस्य तृतीयस्यैव पूर्वशब्देन ग्रहीतुमुचितत्वात् । प्रसङ्गात् द्वितीयपरिहारं द्रढयितुं तत्र प्रसक्तं दोषमाशङ्कते— न चेति । यद्वा हेतुत्रयस्य सूत्रचतुष्टयमात्रविषयकत्वे हशादिप्रत्याहारेषु का गतिरित्याशङ्कते— न चेति ॥ पुनःपुनरिति । ननु 'सुट्तिथोः' इत्यादाविकाराद्युच्चारणेन शास्त्राबोधिताजव्यवहितहल्समुदायस्यासाधुत्वेन 'न पुनरन्तरेणाचम्—' इति भाष्योक्तन्यायेन च एतदावश्यकमिति चेत्, न; एकैकेनैवाचा हल्व्यक्तिद्वयोपकारसंभवेन प्रतिव्यक्ति तदुच्चारणवैयर्थ्यमित्याशयात् । न चायमाचार एवेति मध्यमसमाधौ नैतदुद्भावनमुचितम्, आचारपदेन सौत्रनिर्देशस्यैव ग्रहणात् ॥ अनभिधानादिति । यत्तु पाठकः— 'कोयष्टिकष्टीकृते' इति मालत्यां प्रयोगदर्शनादयुक्तमिदमिति,

तन्न; रुत्वानुवादेन उत्वविधिसामर्थ्येन भावकार्यमात्रस्य उत्वं प्रति सिद्धत्व-ज्ञापनेन परत्वाद्विसर्गे नव्यमते अल्विधित्वेन स्थानिवत्त्वाभावेनादोषात् । न च विभ्राट् मिनोतीत्यादौ 'यणः—' इति द्वित्वापत्तिः, एवंजातीयानां दृढतर-मानाभावेनानभिधानात् ॥ कर्तव्यमेवेति । अत एव 'तुल्यास्य—' इति सूत्रे 'ऌकारस्य लपरत्वं वक्ष्यामि' इति भाष्योक्तिः संगच्छते । व्याख्या-स्यामीति तु नार्थः, वक्ष्यमाणस्य रेफबाधकत्वानापत्तेः । अत एव जात-स्याणो रपरत्वमिति कल्पे उः स्थाने एङैचौ स्यातामित्येवापादितं भाष्ये, न तु लपरत्वमिति ॥

अत्र वदन्ति— 'अतो ऌ—' इति सूत्रे ऌकारग्रहणं रप्रत्याहार-स्यानित्यत्वज्ञापनाय; तत्फलं तु 'वनो र च' इत्यादौ विधेये, उच्चारणार्था-नामपि इत्संज्ञयैव निवृत्तेः 'तस्य लोपः' इति सूत्रे विवरणे उक्तत्वात् । 'इणो यण्' इत्यादौ णकारविसर्गोच्चारणयोरविशेषात् यप्रत्याहारेणैव व्यवहारे न लाघवम् । 'यण्वतः' इत्यादौ अर्धमात्रालाघवसत्त्वेऽपि 'ङेर्यः' 'योऽचि' इत्यादावुक्तार्थभ्रमवारणाय त्रेरयङ्वन्नाश्रयणम् । अव्यापकत्वं तु तवापि दुस्त्यजम्, 'आदिरन्त्येन—' इत्यस्य लोपापवादत्वात् । इत्सदृशेनेत्यर्थेन चारितार्थ्यवर्णनं तु न युक्तम्, 'इको यण्—' इत्यादौ मध्यगानामभावेन तदाक्षेपानापत्तेः । किं च 'एच इक्— इत्यादौ गस्य इत्सदृशत्वाभावेन प्रत्याहारानापत्तिः । न च जश्त्वस्यासिद्धत्वम्, 'झलां जश्—' इत्याद्यनु-रोधेन 'आदिरन्त्येन—, इत्येतद्दृष्ट्या त्रिपादीसिद्धत्वस्यावश्यकत्वात् । किं च सूत्रस्थेषु इगादिषु इत्संज्ञाप्रवृत्तिसंभवेन इत्सदृशेनेत्यर्थानुपयोगः, इगादी-नामपि प्रातिपदिकत्वेन व्यवसितत्वात् । तस्मादाद्यस्यैव व्यापकत्वम्, नेत-रयोः । अत एव उपसंहारभाष्ये 'तस्मात्पूर्वोक्त एव परिहारः' इत्युक्तम् । न चोत्तरोपमर्देन पूर्वस्थापनं न क्वापि दृष्टमिति वाच्यम्, 'तस्मादस्तु स एव मध्यमः पक्षः' इति तत्र तत्र भाष्य एवं बहुशो दृष्टत्वात् । यदपि—

'अच्प्रत्याहारे शङ्का कृता, न हल्प्रत्याहारे' इत्युक्तम्; तदपि न, उगाद्यर्थं तस्योपलक्षणताया आवश्यकत्वात् । यच्च विवरणे— 'उगादिषु ग्रहणे दोषाभावं मनसि निधाय तथोक्तम्' इति; तन्न, रणितो भणित इत्यादौ 'श्र्युकः किति' इति निषेधस्य दोषत्वात् । यच्चोक्तम्— 'सूत्रचतुष्टयोपादानेनैवास्य प्रवृत्तिर्दर्शिता' इति; तदपि न, तथा सति सूत्रचतुष्टयव्याख्यावसर एव तद्विचारस्य कर्तव्यतया हयवरट्सूत्रे तत्करणेन हल्प्रत्याहारसाधारण्यस्य सूचनात् । तुल्यास्यसूत्रस्थम् 'लपरत्वं वक्ष्यामि' इति भाष्यं तु व्याख्यास्यामीत्येवंपरतया नेयम् 'द्विर्वचननिमित्तेऽचि अजादेशः स्थानिवदिति वक्ष्यामि' इति 'द्विर्वचनेऽचि' इति सूत्रस्थभाष्यवत् । न चैवमनेकसूत्रेषु लाघवेन व्यवहारार्थं प्रत्याहारः; अस्य तु नानेकेषु व्यवहारः; किं च र्यवरवर्णबोधनार्थं न क्वापि प्रत्याहारो दृष्ट इति वाच्यम्, 'नश्छव्यप्रशान्' 'एङः पदान्तादति' इत्यादौ व्यभिचारात् । न चैवं रप्रत्याहारस्य तस्य क्वाचित्कत्वस्य च स्वीकारे अतिगौरवम्, 'टाङसि—' इत्यादौ इकारादिप्रत्याख्यानाय अनेकक्लेशस्याश्रयणेन मात्रालाघवस्य सर्वतो ज्यायस्त्वबोधनादिति ॥

एतत्सर्वं व्याख्याव्याजेन प्रायो दूषितमपि युक्त्यन्तरैः पुनर्दूषयामः; तथा हि— 'रोः सुपि' 'इणो यण्' 'दडोऽचि च' इत्यादौ सुबिणक्षु अनित्यत्वज्ञापकाभावेऽपि स्वरूपग्रहणवत् प्रकृतेऽपि व्याख्यानतस्तद्ग्रहणे सिद्धे तदनित्यत्वज्ञापनानुपयोगः, तज्ज्ञापनेऽपि अत्र स्वरूपस्य ग्रहणम् अत्र प्रत्याहारस्येत्यत्र व्याख्यानस्यैव शरणत्वात् । न चैवं सर्वत्र अनित्यत्वज्ञापनवैफल्यम्, ऐच्छिकेषु विरुद्धानेककल्पेषु इष्टतो व्यवस्थासंभवेऽपि एककोटेरेव शास्त्रानुगृहीतत्वे तद्विपरीतकोट्याश्रयणस्य यत्नसाध्यत्वात् । न च 'अशब्दसंज्ञा' इति निषेधात् स्वरूपग्रहणं यत्नसाध्यमिति वाच्यम्, 'षट्कति—' इत्यादौ कत्यादिग्रहणेन क्वचिदुक्तनिषेधाप्रवृत्तिबोधनात् । किं च 'वनो रः' 'रिरसुपि' इति न्यासेनैव सिद्धे नैतदनित्यत्वज्ञापने फलं युक्तम् । तदुक्तम् 'इदितो

लुग्धातोः' इति सूत्रे भाष्ये— 'प्रयोजनं नाम तद्वक्तव्यं यन्नियोगतः स्यात्' इति। किं च तदनित्यत्वज्ञापनापेक्षया तदभावज्ञापनमेव लघु, अनेकभ्रमवारणाय बहुत्र व्याख्यानाश्रयणे गौरवात्। 'टाङसि--' इत्यादाविकारादिप्रत्याख्यानपरं भाष्यं तु द्वयोर्न्यासयोः फलभेदसूचनद्वारा जरसिनेत्यादेरसाधुत्वं बोधयितुम्, न तु तथा कर्तव्यमिति तात्पर्यमिति तत्रैव विवरणादावुक्तम्। उक्तार्थभ्रमेत्याद्यपि न, रप्रत्याहारेऽपि तस्य अविशेषात्। मध्यगानामभावेनेत्याद्यपि न, सादृश्यप्रतियोगिभ्यामेव स्वघटितसमुदायाक्षेपसंभवात्। एच इगित्याद्यपि न, परिनिष्ठिते तदभावेऽपि उपदेशे तत्सत्त्वेन तदनुसंधानाच्छाब्दबोधोपपत्तेः; अन्यथा गृहीतशक्तिकानुपूर्व्याः परिनिष्ठिते क्वचिदप्यभावेन वृद्ध्यादिपदेभ्योऽपि शाब्दबोधानुपपत्तेः। झलां जशित्याद्यपि न, गृहीतशक्त्यैव शाब्दबोधोपपत्तेः। इत्सदृशेनेत्यर्थानुपयोग इत्याद्यपि न, मध्यगानामाक्षेपानापत्तेः। रणित इत्याद्यपि न, तत्र एकाच इत्यनुवृत्तेः। न च प्रङ्वते सुगाण्णुत्रः सुगाण्क इत्यादौ 'एङि पररूपम्' 'इको ह्रस्वः—' 'केऽणः' इत्यादयः प्राप्नुवन्ति, प्रथमोपस्थितानगादीन्विहाय अच्प्रत्याहार एव शङ्काकरणेन तेषामनभिधानमित्याशयात्। हयवरट्सूत्रे तत्करणेनेत्यादि तु असंगतमेव, ग्रन्थार्थानवबोधात्। शङ्किते अच्प्रत्याहारे तृतीयपरिहारस्य सत्त्वेन कथमव्यापकतेति शङ्कायां रप्रत्याहाराङ्गीकारे शङ्कितुमुचितस्य तस्य त्यागादेव तर्हि न्यूनतेत्यर्थकम् 'अत एव—' इत्यादि प्रवृत्तम्। न चैवं शङ्कितुमुचितस्य हश्प्रत्याहारस्य त्यागान्न्यूनतेति वाच्यम्, 'उच्चारणार्थवर्णरहित—' इत्यादिना शङ्कानर्हत्वस्यैव उत्तरग्रन्थेन प्रतिपादनात्। एवं सति त्वदुक्तमसंबद्धमिति स्पष्टमेव, हल्त्वसाधारण्ये विवादाभावात्। भाष्यवदित्यप्यसंगतम्, निमित्तशब्दघटितस्य कर्तव्यतायामेव तद्भाष्यतात्पर्यादिति दिक्॥

परे तु 'अतो लृ—' इति सूत्रे लकारोच्चारणं प्रतिपत्तिलाघवाय। 'यणो मयः' इत्यादौ अर्थद्वयलाभाय यण्प्रत्याहारस्यावश्यकत्वे तेनैव सर्वत्र

व्यवहारोपपत्तौ प्रत्याहारान्तरस्य स्वरूपप्रतिपत्तिवारकोपायस्य चाश्रयणे गौरवम् । व्यापकत्वमपि किं प्रत्याहारमात्रवृत्तित्वम्, आहोस्वित् स्फुटतरपरिहारान्तररहितसकलवृत्तित्वम् आहोस्वित् आद्यपरिहारद्वयावताराहसकलवृत्तित्वम्? नाद्यः, हल्प्रत्याहारसमकालिके झलादौ व्यभिचारात् । अत एव न तृतीयः, अन्तःस्थवर्गपञ्चमचतुर्थतृतीयद्वितीयाद्योष्मणां स्वसजातीयेषु निवेशस्यैव ग्रहणार्थत्वेन स्वविजातीयेषु निवेशस्य परार्थत्वनिर्णयेन झलादिष्वपि द्वितीयपरिहारस्य सत्त्वात् । न द्वितीयः, पुनः पुनरकारोच्चारणेन हलामुच्चारणे साहाय्यसंपादनार्थत्वनिर्णयेन प्रत्याहारे ग्रहणाभावस्य सुवचत्वेन स्फुटतरपरिहारान्तरस्यैव सत्त्वात् । न चान्त्यमाद्यद्वय एवान्तर्भवतीति न तृतीये चोदनार्हा, हशादिप्रत्याहारेऽपि तौल्यात् । अत एव हकाराद्युत्तरवर्त्यकारस्य न हलादिप्रत्याहारेषु ग्रहणम् । इयान्परं विशेषः— हकाराद्युत्तरवर्त्यकारस्य निरनुनासिकत्वम्, एतस्य सानुनासिकत्वं तद्धलाच्च प्रत्याहारार्थत्वमपि । किं च 'हलदन्तात्—' इति ज्ञापकात् न हल्प्रत्याहारे अतो ग्रहणमित्यपि स्फुटतरं परिहारान्तरम् । किं च कार्यकालपक्षे तत्तत्कार्यसमकालमेव हल्पदशक्तिग्रहस्य वाच्यतया तदानीं तत्राकारप्रवेशासंभवः । अच्प्रत्याहारे शङ्का कृतेत्याद्यपि न, 'न य्वाभ्याम्—' इति चस्यापि विधानापत्त्या 'इको:' इत्यादौ यणाद्यापत्त्या च भाष्योपलक्षणताया आवश्यकत्वात् । एतेन हयवरट्सूत्रे अणगादिषु ग्रहणे फलाभाव इति विवरणोक्तमपास्तम्, अणगेत्यत्रैव यणापत्तेश्च । वस्तुतस्तु अज्ग्रहणेषु इत्यस्य अज्बोधकसूत्रेऽपीत्यर्थं विवरीतुमेव भाष्ये सूत्रचतुष्टयोपादानेन स्वयमेव तथा व्याख्यातत्वेन च सूत्रचतुष्टयसाध्यप्रत्याहारमात्रे अनुबन्धग्रहणस्य शङ्कित्रभिप्रेतत्वेन विवरणग्रन्थोऽसंगत एव । ऊकालोऽजिति वक्ष्यमाणपरिहारस्य अज्मात्रविषयकत्वेन अच्प्रत्याहारस्य व्यापकत्वेन च तस्यैवोपादानेऽपि हल्प्रत्याहारेष्वप्येतैरुपायैरनुबन्धग्रहणं वारणीयम्, एवं हशादिषु यादिग्रहणवारणाय यत्नान्तराश्रयणं व्यर्थम्, पुनः पुनरकारोच्चारणस्य सूत्रानन्त्यत्वबोधनार्थत्वेन तस्यार्थान्तरज्ञापकत्वासंभवाच्च । तद्विषयप्रयोगाणामनभिधानमपि

निर्मूलम्, 'एकः शब्दः शास्त्र—' इत्यादिप्रयोगविरुद्धं च, व्यापकमुपलक्षणतया विषयविशेषमुपादाय प्रवृत्तस्य भाष्यस्य संकोचकाभावात्। वस्तुतस्तु इत्सद्दशेनेत्यर्थेऽपि आक्षिप्तसमुदायघटकतया अनुबन्धानामपि येननाप्राप्तिन्यायेन लोपं बाधित्वा 'आदिरन्त्येन—' इत्यस्य प्रवृत्त्या 'लोपश्च' इति तृतीयपरिहारो निर्युक्तिक एव। इत एवापरितोषात् 'तस्मात्पूर्वोक्त एव परिहारः' इति भाष्यकृतोक्तम्। तस्मात्पूर्वोक्तानि दूषणानि शिथिलान्येव। अनुनासिकत्वं च प्रामाणिकमेव, तुल्यास्यसूत्रस्थलकारस्यलपरत्वंवक्ष्यामीति भाष्यसंदर्भस्वारस्यात् जातस्याणो रपरत्वमिति कल्पे उः स्थाने अणो भाष्यकृता लपरत्वापादनाच्च। यत्तु उरण्सूत्रे शेखरे अस्मिन्कल्पे रेफवत्स्थानिकस्य रपरत्वमित्यादि व्यवस्थापितम्, तन्न, रपरस्यानादेशत्वेन स्थानेन्तरतमपरिभाषाया अप्रवृत्तेः। गवां संघं प्रति गौर्धावतीत्यादिस्तत्प्रकारोऽपि अणो रेफानन्तरतमत्वादसंभवीति प्राहुः॥ **इति रप्रत्याहारविचारः॥**

मुखसुखार्थमचामुच्चारणमिति युक्तिसिद्धमपि भाष्यसंमत्या द्रढयति— न पुनरिति। उच्चारणार्थत्वेऽपि कुतो न ग्रहणमित्याशङ्क्य मूलाभिप्रेतमप्राधान्यमग्रहणहेतुतया विवरीतुं भाष्यमुपपादयति— एषा हीति। हलिति सूत्रे अन्त्यमित्यर्थे नान्योन्याश्रय इत्यत आह— न विभक्ताविति। आदिना 'क्किति च' इत्यादेः संग्रहः॥ दशसूत्रावृत्ताविति। इदं चिन्त्यम्— आनन्तर्यबुभुत्सया प्रयुक्तस्याथशब्दस्य शङ्खवीणावेणुध्वनिवत् श्रुतितो मङ्गलार्थत्वस्येव आवृत्तिं विनापि इह इत्संज्ञाबोधकस्यास्य श्रुतितः क्रमबोधकत्वोपपत्तेः। हरिदीक्षितास्तु— रान्तसमुदायस्य उद्देश्यत्वे अज्ञातज्ञापकत्वरूपोपदेशत्वाभावादित्संज्ञानापत्तिः; यद्यावृत्त्यादिनोभयरूपत्वम्, तदा गौरवमित्याहुः॥ नन्विति। नन्विदमसंगतम्, लकारे इत्संज्ञामबोधयित्वा हलामित्संज्ञाबोधनमयुक्तमिति शङ्काया अनेनापरिहारादिति चेत्, न; 'दशसूत्रावृत्तौ गौरवात्' इत्यन्तस्य 'अतः सूत्रावृत्त्या तं परिहरति' इत्यनेन योजनां कृत्वा तदुत्तरं लघुतरोपायेनान्योन्याश्रयपरिहार-

शङ्कापरत्वेन नन्वित्यादेर्गौरवादित्यन्तस्य योजनीयत्वात् पाठक्रमादार्थक्रमस्य बलीयस्त्वात् । योजितं चैवमेव भाष्यम् 'इको गुण—' इति सूत्रे कैयटेन । यद्वा 'पाणिनेरयुक्तम्' इति पूर्वपक्षिणः शङ्कायां तत्परिहर्तुकामेन सिद्धान्तिना आवृत्त्यादिना इतरेतराश्रयपरिहृतिं जानतस्तटस्थस्य नन्वित्यादिशङ्कया निरुद्धेन तटस्थशङ्काया एव परिहर्तव्यत्वेनादोषात् । यद्वा अयुक्तमित्यन्तेन सूचितस्य लकारे इत्संज्ञां बोधयित्वा हलामित्संज्ञाबोधनं युक्तमित्यस्य नन्वित्यनेन आक्षेप्यत्वेन नासंगतिः ॥ रुप्रभृताविति । 'रु शब्दे' इत्यादावित्यर्थः । वस्तुतः सूत्रभेदो भवत्येवेत्यत आह—दोषायेति । नन्वेवमप्यानुपूर्वीभेदात्पारायणादावदृष्टहानिरेवेत्यत आह—सति संभव इति । इदं प्रत्याख्यातन्यासे अतिव्याप्तिवारणाय । अयं भावः—अङ्गानि हि सति संभवे दृष्टद्वारैवादृष्टार्थानि, तदसंभवे शुद्धादृष्टार्थानि । द्वितीयान्यपि द्विविधानि— कानिचित्स्वापेक्षया लघुतरोपायसाध्यप्रयोजनकानि, कानिचिच्च सर्वथा शास्त्रान्तरानिर्वाह्यप्रयोजनकानि । 'दो दद्घोः' इत्यादौ चानिष्टलक्ष्यसाधकत्वात्प्रकारत्रयस्यासंभवः । केवलं पारायणादावदृष्टमात्रम् । तथा च 'दो दद्घोः' इति न्यासस्य दृष्टद्वारकादृष्टासिद्धिगौरवरूपैर्लघुभिर्दोषैर्ग्रस्तत्वेन ततो वरं पारायणादावदृष्टहानिरूपैकदोषसहनम् । 'न दोषाय' इत्युक्तिस्तु अनुदरा कन्येतिवदल्पदोषसमुद्भवात् । एतेन तत्र प्रत्याख्यानपरभाष्यस्य दृष्टप्रयोजनराहित्यमेवार्थः । अदृष्टार्थं तु तथा कर्तव्यमेवेति पूर्वग्रन्थेन अस्य भाष्यस्य न विरोधः, उपसंहृत्य करणस्य अदृष्टहान्यनाधायकतया 'अच उपसर्गात्तः' इति सूत्रे भाष्ये उक्तत्वादिति निरस्तम् । नन्वेवं वृद्धिसूत्रस्थं लघुतरप्रकारेण सर्वनिर्वाहे शङ्किते 'सिध्यत्येवमपाणिनीयं तु भवति' इति भाष्योक्तमयुक्तमिति चेत्, न; पाणिन्यसंमतबहुतरलघुप्रकाराश्रयणेन निर्वाहसंभवेऽपि पाणिन्युक्तप्रकाराणामयुक्तत्वमित्येव तदर्थात् । केचित्तु 'अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः' इति स्मृत्युक्तसूत्रलक्षणस्य मत्कल्पिते 'दो दद्घोः' इति न्यास एव सत्त्वेन न सूत्रभेदः; प्रत्युत त्वत्कल्पिते तदसत्त्वेन तत्रैव सूत्रभेद इत्यभिप्रेत्य स्वतन्त्रेण भाष्यकृता लघुन्यासं शास्यते

पाणिनिः । एवमेव 'शास इदङ्हलोः' इति सूत्रस्थभाष्यस्याशयः । तथा च गुरुतरन्यासस्येष्टसाधकस्य सूत्रलक्षणानाक्रान्तत्वेन न तस्यादृष्टजनकत्वम्; किं तु उपसंहृत्यकृतस्यैव, उक्तस्मृतिप्रामाण्यात् । एतेन दोषायेति शेष इत्यपास्तम् । एवं च न तत्र तत्र प्रत्याख्यानासंगतिरित्याहुः ॥ अतिगौरवादिति । वक्ष्यमाणविशिष्टसूत्रावृत्तिमपेक्ष्य, लकारे इत्संज्ञां बोधयित्वा हलामित्संज्ञाबोधनमपेक्ष्य वेतिशेषः । किं च 'उपदेशे इदन्त्यम्' इति सूत्रस्यापवादसिद्ध्युपयोगिनि प्रवृत्तेः पूर्वम् 'अनुनासिकः' इति सूत्रस्य अच्पदार्थबोधाभावेन अपवादकत्वग्राहकाभावादनिष्टविषयेऽपि प्रवृत्त्यापत्तिः; अपवादकत्वे निर्णीते तत्सिद्ध्युपयोगिन्येव प्रवृत्तौ च अपवादत्वनिर्णय इत्यन्योन्याश्रयश्च ॥ मध्यमो वर्ण इति । स्वं संहिता च अन्त्येनाद्यभिन्न इति वाक्यार्थः 'वृद्धिरादैच्' इतिवदिति भावः ॥ इग् गताविति । संहितेति लघुन्यासेन सिद्धौ गुरुतरावृत्त्यादिना तत्परिहारपरभाष्यप्रामाण्यादस्मात् तृचोऽनभिधानमिति भावः । एतेन एवं सति 'एत्येधत्यूठ्सु' इति वृद्ध्यापत्त्या इदमसंगतमित्यपास्तम् ॥ अनन्वितार्थकत्वमिति । इदमग्रिमं च चिन्त्यम्, पूर्वपरवर्णसंबन्धस्य मध्यमस्य लाभार्थत्वात् अन्त्यस्य व्यावृत्त्यर्थत्वाच्च । वस्तुतस्तु वक्ष्यमाणरीत्या अनिता प्रत्याहारापत्त्या नायमर्थ उचित इति ध्येयम् ॥ हल् च हल् च हलिति । 'नपुंसकमनपुंसकेन —' इत्येकशेषः । अत्र कल्पे न विशिष्टसूत्रस्य तन्त्रादि । ननु हल्पदे एकशेषमुक्त्वा हलन्त्यमित्युक्त्या अन्त्यपदस्योभाभ्यां संबन्ध इति गम्यते; तत्कथमत आह— संबन्धसामान्येति । अवयवत्वं तत्त्वेनारोपितत्वं द्वयमपि संबन्धत्वेनानुगमय्य षष्ठीति भावः । नन्विदम् 'आदेशप्रत्यययोः' इति सूत्रस्थेन 'ओस् संबन्धद्वयार्थक इत्यभिमानः' इति रत्नग्रन्थेन विरुद्धमिति चेत्, न; वैरूप्येणान्वयेऽपि सौत्रत्वात् द्वन्द्व इति मूलेनावयवत्वादिनैव नानासंबन्धयोः षष्ठीवाच्यत्वोक्तेराभिमानिकत्वात् । वस्तुत इदमापाततः, तत्त्वेनारोपितत्वस्य षष्ठ्यर्थत्वे मानाभावात् ईदृशपरम्परासंबन्धस्य षष्ठ्यर्थताया अग्रे स्वेनैव दूषयिष्यमाणत्वाच्च । अभेदस्तु न संबन्ध इति मञ्जूषायां स्पष्टम् ।

न चात्रावयवत्वमेव षष्ठ्यर्थः, तच्च किंचिदंशे मुख्यं किंचिदंशे गौणमिति वाच्यम्, तथा सति संबन्धसामान्ये षष्ठीत्यस्यासंगतेः एकेनैव पदेन गौणमुख्योभयबोधे गङ्गायां मीनघोषौ स्त इत्यस्यापि साधुत्वापत्तेश्चेति दिक् ॥ इति वदेदिति । इदमप्यापाततः, तथा सत्येकशेषानापत्त्या उपरञ्जकतया लकारांशेऽपि तत्संबन्धप्रदर्शनस्यावश्यकत्वात् । किं च 'हल विलेखने' इति धातौ लस्येत्संज्ञावारणाय उपदेशेऽन्त्यमित्यस्योभयत्राप्यावश्यकत्वम् । उत्सर्गवाक्यार्थबोधात्पूर्वमपवादवाक्यार्थबोधे विरोधमाशङ्क्याह— पूर्वं हीति । नन्वेवमपि अपवादविषयपरिहारेण उत्सर्गकृतसंस्कारबुद्धेरपवादवाक्यार्थग्रहाधीनत्वेन अन्योन्याश्रयतादवस्थ्यमत आह— पदार्थज्ञानमात्रेणेति । वाक्यार्थबोधं विनैव तद्विषयपरिहारसंभवान्नान्योन्याश्रय इति भावः । 'अणुदित्—' इत्यत्र उदिति प्राचां संज्ञेति बोध्यम् ॥ तद्धलभ्यमिति । तेन 'हल विलेखने' इति धातौ नातिप्रसङ्गः, तत्रोपदेशे अकारस्यान्त्यत्वात् ॥ पूर्वेषामिति । अन्त्येन सहितः कश्चन स्वचरमावयवकसमुदायस्य संज्ञेति वाक्यार्थः स्यादिति भावः ॥ उभयोपादाने त्विति । अनापत्तेरित्यन्तमेकं वाक्यम् 'वेत्युक्ते' इत्युत्तरं योज्यम् ॥ अत्रशिष्टमपीति । इदमापाततः, परस्मिन्सतीत्यादिना वक्ष्यमाणयोराद्यन्तत्वयोर्वर्णद्वयात्मकसमुदायघटकयोरपि संभवात् । आक्षेपे बीजं तु अनुपात्तसंज्ञ्याकाङ्क्षैव । प्रतीतेरित्युत्तरम् 'समुदायस्याक्षेपात्तदीयस्य च' इति शेषः । एतस्य च आद्यन्तत्वस्येत्यनेनान्वयः । नियमेन किंचिदस्तीति प्रतीतौ हेतूपन्यासाय— परस्मिन्नित्यादि ॥ इगादिशब्देष्विति । फलाभावान्नेत्संज्ञा; इदन्त्यसदृशेनाप्यभावेन 'आदिरन्त्येन—' इत्यस्य वैयर्थ्यापत्तिश्चेति भावः ॥ व्यक्तिपक्ष इति । अकारादिव्यक्तिर्नानेति पक्ष इत्यर्थः । मध्यगेष्विति वाक्यशेषः ॥ **हलन्त्यम्** ॥ समासाभावस्येति । प्राय इति शेषः; तेन 'अपृक्त एकाल्प्रत्ययः' 'निपात एकाजनाङ्' 'अजादेर्द्वितीयस्य' 'इदितः—' इत्यादौ कर्मधारयसत्त्वेऽपि न क्षतिः ॥ तत्र विद्यमानमिति । क्रियामात्रस्य खण्डकालत्वमभिप्रेत्य । यद्वा 'साम्ना स्तूयते' इत्यादौ गीतेः स्वाभिव्यक्तशब्दद्वारककरणत्ववत्

स्वाभिव्यक्तशब्दद्वारकमधिकरणत्वमुच्चारणे । यद्वा आद्यमुच्चारणं यस्येति बहुव्रीहिरिति भावः । केचित्तु गोषु दुह्यमानास्वितिवत्सप्तमीति प्राहुः ॥ तेनेति । प्रधानेत्संज्ञाभवनं परिहाय अन्त्यपदार्थेऽन्वयकरणेनेत्यर्थः ॥ हल्प्रत्याहार-सिद्ध्युत्तरमिति । अयं भावः— वर्णोपदेशे हलादिसंज्ञानामनिष्पादात्तत्सिद्ध्यु-त्तरम् 'अइउण्' इत्यादावित्संज्ञा; धुडादौ तु पूर्वमेव हल्संज्ञानिर्वृत्त्योपदेशोत्तर-मेव सेति ॥ प्राय इति । इदमव्ययम् । दैपि आत्वोत्तरमेवेत्संज्ञाप्रवृत्तेरिदमुक्तम्; चक्षिङादौ नुम्वारणायेकारेत्संज्ञां कृत्वैव ङकारे इत्संज्ञाकरणाद्वा । यत्तु— 'जसः शी' इत्यभिप्रायकं प्राय इतीति, तन्न; तेनेत्यादिग्रन्थसंदर्भस्य हलन्त्य-सूत्रविषयकत्वात् ॥ विनिर्मुक्तस्यैवेति । उपस्थितावन्वेति । तेन 'अरुणया पिङ्गाक्ष्या—' इत्यादौ मीमांसकमते पार्ष्णिकपरस्परावच्छेदवत् अनुबन्धविनि-र्मुक्तपदार्थोपस्थितिरिति पार्ष्णिकः परस्परावच्छेदः । तत्र हेतुमाह—उपदेशोत्तरेति । इदं च विधिप्रदेशाभिप्रायकम् । अयं भावः—उपदेशोत्तरमेवेत्संज्ञालोपाभ्यामपहारेण 'स्वं रूपम्—' इति शक्तिग्रहवेलायां तेषामसत्त्वेन तदघटितसमुदायान्तर्भावेण शक्तिग्रहे वृत्ते उपस्थितिशाब्दबोधावपि तदघटितसमुदायस्यैवेति । अनुवादप्रदे-शेषु तु विनिर्मुक्तोपस्थितौ हेतुं वक्ष्यति । नन्वेवं शक्तत्वस्याप्यनुबन्धविनिर्मुक्त एव प्राप्त्या सानुबन्धाद्विभक्त्यनुपपत्तिरत आह—तेनैवेति । अयं भावः— टित्त्वाद्युपलक्षितधस्यैव विहिततया तद्बोधके परिनिष्ठिते शब्दे उच्चारयितव्ये अन्यस्यासंभवात् धुडित्येवोच्चारितम् । न चेदमपरिनिष्ठितम्, उपदेशोत्तरमेवेत्सं-ज्ञायाः प्रवृत्तियोग्यत्वेन धुडित्यस्योच्चारणकाले परिनिष्ठितत्वसंभवात् । न चैवं जश्त्वादिकमपि उपदेशोत्तरमेवेति तदपि न स्यादिति वाच्यम्, श्रोतॄणां कल्पि-तप्रक्रियाक्रमेण साधुत्वग्रहेऽपि परिनिष्ठितस्यैवोच्चारणावश्यकत्वात् । न चैवमित्सं-ज्ञालोपाभ्यामनुबन्धविनिर्मुक्तपरिनिष्ठितस्यैवोच्चारणापत्तिरिति वाच्यम्, अनवबो-धात् अज्ञातस्वस्वरूपज्ञापनतात्पर्यकोच्चारणविषयसमुदायान्त्यत्वस्य इत्संज्ञोपजीव्य-त्वेन तस्य विनिर्मुक्तोच्चारणे कुत्राप्यभावेन सूत्रस्यैवासंगत्यापत्त्या सानुबन्ध एवा-ज्ञातस्वस्वरूपज्ञापकत्वस्य तत्तात्पर्यकोच्चारणविषयत्वस्य चान्यथानुपपत्त्या कल्पनेन

तदन्यथानुपपत्त्या चेत्संज्ञायाः टित्त्वादिप्रयुक्तकार्यसंपादनमात्रफलकत्वस्य स्वप्रयुक्तलोपाघटितसमुदायस्यैव परिनिष्ठितत्वस्य च कल्पनेनादोषात् । न चैवं 'तस्य लोपः' इत्यस्य वैयर्थ्यं बोध्यस्य निरनुबन्धकत्वेन प्रयोगे श्रवणापत्तेरभावादिति वाच्यम्, 'लशकु—' इत्याद्यर्थं तदावश्यकत्वात् निरनुबन्धस्यैव विधेयताप्रतिपत्त्यर्थत्वाच्च । न चैवमनुबन्धविनिर्मुक्तोपस्थितेर्दत्तजलाञ्जलितैवेति वाच्यम्, अनवबोधात् श्रोतृप्रतिपत्तिक्रमेण तत्तत्पदशक्यतया गृहीतार्थबोधनतात्पर्येणैव आचार्याणां तत्तत्पदप्रयोगस्य 'नाज्झलौ' इत्यादिसूत्रेषु भाष्यकृता ध्वनितत्वात् श्रोतॄणां चोपदेशोत्तरमेवेत्संज्ञालोपाभ्यामनुबन्धस्यापगमे शक्तिग्रहकाले तद्विमुक्तस्यैव सत्त्वेन तत्रैव शक्तिग्रहात् । न चैवं श्रोतॄणां विनिर्मुक्त एव शक्तत्वग्रहेण तस्यैवोच्चारणापत्तिः, दत्तोत्तरत्वात् । मूलार्थस्तु उच्चारयितुः पाणिनेः सानुबन्धादेव विनिर्मुक्तोपस्थितेस्तस्यैवार्थवत्त्वमिति । यत्तु— अनुनासिक इत्यादिनिर्देशेन अनुबन्धस्य संज्ञित्वाभावो बोध्यत इति, तन्न; तथा सति 'उपदेशोत्तरकालेत्संज्ञा' इति पूर्वोपन्यस्तहेतोरसांगत्यापत्तेः, 'उगितश्च' इत्यादावनुपपत्तेश्च । न ह्युक्तपदबोध्यत्वमितः । नन्वेवं बोधके स्थितानामनुबन्धानां बोध्ये कार्यकारित्वे वैयाकरणे चित्स्वरापत्तिरित्यत आह— तत्त्वाभावादिति । मात्रच्प्रत्याहारान्तःपातिनो मात्रचश्चित्त्वेन प्रत्याहारसंपादकान्त्यवर्णस्येत्त्वाभावादिति भावः । वस्तुतो धुडादौ संज्ञायामानर्थक्येन संज्ञिनि कार्यकारित्वेऽपि प्रत्याहारसंपादकस्यास्य बोध्योपकारकत्वे मानाभावान्निर्दलैषा शङ्का, 'चितः सप्रकृतेः—' इति संदर्भेण 'चितः—' इत्यस्य प्रत्ययविषयत्वाच्च ॥ सूत्रान्तर्गतानामेवेति । एवोऽप्यर्थे, मध्यगसादृश्यस्य सूत्रान्तर्गतानन्तर्गतसाधारण्यात् । एतेन बोध्ये विभक्तिकार्यमित्संज्ञाभावश्च समाहितमिति बोध्यम् । विनिर्मुक्तोपस्थितौ साधकं भाष्यमाह— अत एवेति । अन्यथा शङ्काया एवानुत्थितिरिति भावः । ननु शित्करणादेव शितः सर्वादेशत्वे सिद्धे शिद्ग्रहणं व्यर्थमित्यनेकालसूत्रस्थभाष्यात्सर्वादेशतापर्यन्तमनुबन्धस्यावस्थितिरिति प्रतीयते । तथा च पूर्वोक्तनियमो व्यभिचरित इत्यत आह— यत्त्विति । अत्र वदन्ति— ग्राहकशास्त्र-

स्यार्थवदेकदेशेऽप्रवृत्त्या इशि सवर्णग्रहणाप्रसक्तितादवस्थ्येन एकदेशयुक्तित्वावश्यक-तया नोक्तार्थे उक्तं भाष्यं मानम्। अत एव 'इङश्च' इत्यादौ न ईङो ग्रहणम्। अत एव चाग्रहीदित्यादौ सिज्लोपाय स्थानिवद्भावान्वेषणं भाष्योक्तं संगच्छते। अत एव चँ ऊठ्स्विति गुरुनिर्देशः सूत्रकृता कृतः। न चानुवादप्रदेशेषु ज्ञातस्वरूपज्ञापकत्वेन उपदेशत्वाभावादित्संज्ञालोपयोरनापत्तौ विधिप्रदेश इव न पूर्वोक्तयुक्त्या विनिर्मुक्ते शक्तिग्रहसंभवः; किं तु लक्षणयैव विनिर्मुक्तोपस्थितिः; तत्र चोपस्थापके अण्त्वाभावेन अणुदित्सूत्राप्रवृत्तेर्न पूर्वोक्तदोषः; इशि तु विनिर्मुक्त एव शक्त्य-शक्तयोर्ग्रहणेन ग्राहकशास्त्रप्रवृत्तिसंभवः। न च 'यस्येति च' इत्याद्यनुरोधेन अणुदित्सूत्रस्थाण्ग्रहणस्य स्वबोध्यबोधकत्वेन अनुवादप्रदेशे लक्षणया विनिर्मुक्तो-पस्थितौ ग्राहकशास्त्रप्रवृत्तिर्दुर्वारा। अत एव च तपरशास्त्रं चरितार्थम्; अन्यथा विधिप्रदेशेषु 'अप्रत्ययः' इत्यनेन निषेधेन अनुवादे अनण्त्वेन च ग्राहकशास्त्राप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेवेति वाच्यम्, तादृशार्थपरत्वे अमादिप्रत्याहारेषु कादीनामपि प्रवेशापत्तेः। 'यस्येति च' इत्यादौ तु 'सख्युर्यः' इत्यादिवत् प्रकृतिविकृत्योः समानार्थत्वेन निर्वाहः। तपरसूत्रं तु 'वृद्धिरादैच्' इत्याद्यर्थम् 'उर्ऋत्' इत्यर्थे स्वरूपप्रतिपत्तिवारणार्थं चावश्यकमिति वाच्यम्, एवमपि वक्ष्यमाणरीत्या 'इट ईटि' इत्यस्य निमित्तभूतस्य टिदित्त्वस्याल्वृत्तेरतिदेशेन लाभानापत्तौ 'विशिष्टं ह्येषोऽनल्माश्रयते' इति स्थानिवत्सूत्रभाष्यासंगतेः। किं च स्थानिवत्सूत्रस्थ-भाष्यविरोधः। तत्र हि अतिखट्वायेत्यादौ याटमाशङ्क्य 'प्रश्लिष्टनिर्देशात्सिद्धम्' इत्युक्तम्। आप्पदस्य पिदाकारपरत्वे तु प्रश्लेष इव प्रतिपदोक्तपरिभाषासंचारेण प्रश्लेषवैयर्थ्यात्तदसंगतिः। किं च लुङ्त्वादीनामतिदेशानापत्तिः, 'पिच्च ङिन्न' इति निषेधात्। किं च सर्वेषु सानुबन्धकनिर्देशेषु रूपमाश्रीयत इति तत्र तत्र भाष्यासंगतिः। किं च 'अत्वसन्तस्य' इत्यादौ सूत्रार्थानुपपत्तिः, मतुपि उका-रस्य समुदायावयवत्वात्। तस्मादनुवादप्रदेशेषु न विनिर्मुक्तोपस्थितिर्न्याय्या; किं तु बोधकगतटित्त्वादेर्बोध्ये आरोपेणैव तत्तत्कार्यप्रवृत्तिः। न चैवमापे इत्यादौ 'याडापः' इत्यापत्तिः, आ आबिति प्रश्लेषेण वारणात्। परे तु पूर्वोक्त-

युक्त्या पूर्वोक्तभाष्यानुरोधेन च सानुबन्धकग्रहणेषु क्वचिद्विशिष्टरूपविवक्षायामपि क्वचिदनुबन्धविनिर्मुक्तोपस्थितिरङ्गीकार्या, देप्यात्वे कृते भूतपूर्वगत्या पित्त्वेन अदाबिति निषेधोपपत्तिरिति घुसंज्ञासूत्रस्थभाष्यात् नदीतरे घसंज्ञापादनपरघसंज्ञासूत्रस्थभाष्याच्च । अत एव 'उञि च पदे' इत्यत्र पदे इति सार्थकम् । तदेतदभिप्रेत्य रमायै इत्यत्र 'आटश्च' इति वृद्धिरिति प्राग्भिरुक्तम्, क्वचिद्विशिष्टरूपतात्पर्येणापि सानुबन्धकनिर्देशात् । विधिप्रदेशेषु तु विनिर्मुक्तोपस्थितिरेव, तथैव बहुभाष्यदर्शनात् तद्विपरीतादर्शनाच्च । तथा हि— नधातुसूत्रे 'धातुग्रहणं किमर्थम्? लूञ् लविता इति भाष्यम् । बोध्यस्य सानुबन्धकत्वे तदसंगतिः स्पष्टैव । न च तावतापि अनुबन्धानां सामर्थ्याद्बोध्योपकारित्वेन तदसंगतिः, अनुबन्धनिमित्तककार्याणामगत्या तथा प्रवृत्तावपि न धात्वित्यादीनां तथा प्रवृत्तौ मानाभावेन ममादोषात् । किं च आदेशेषु स्वरितत्वमाशङ्क्य 'तिति प्रत्ययग्रहणं कर्तव्यम्' इति वार्तिकोक्तमपि संगच्छते; अन्यथा तव्यदादौ स्थानिवद्भावेन तिति चरितार्थस्यास्य तपरसूत्रगृहीततात्कालिकवर्णशक्तिकेन तपरेण बोध्ये तिति वर्णे तदप्रवृत्त्या तदसंगतिः । मम तु सर्वेषामनुबन्धकार्याणां बोधकगतानुबन्धानां बोध्ये आरोपेणैव प्रवृत्त्या न तदसंगतिः । निर्मुक्तोपस्थितिश्च एतत्सूत्रविषय एव नान्यत्र, 'उपदेशोत्तरकालेत्संज्ञा' इति भाष्येणोपदेशमात्रोपजीवीत्संज्ञाविषये तथा बोधनात् 'जश्शसोः—' इत्यादौ तु आनुपूर्व्यात्सिद्धम्' इत्यनेकात्सूत्रस्थभाष्याच्च । न चैवम् 'णेरनिटि' इत्यादीनां तत्तदपवादत्वापत्तिः, अन्तरङ्गत्वात्पूर्वमेवेत्संज्ञाप्रवृत्तेः । न चैवमप्युपसंजनिष्यमाणन्यायावतारः, अपवादत्वस्य कस्यचिदप्यक्लृप्तत्वादिति प्राहुः । अत्रैव प्रसङ्गादाह— अत्र केचिदिति । व्यतिरेकेण व्याप्तिं दर्शयति— यो हीत्यादिना ॥ तदर्थभूत इति । अनुबन्धानां स्वघटितबोधकानवयवत्वं साध्यम्; स्वघटितसमुदायबोध्यविधेयवृत्तिविधेयत्वसमनियतानुपलब्धिर्हेतुरिति कश्चित् । केचित्तु 'स कदाचित्तत्रोपलभ्यत एव' इति ग्रन्थस्वारस्यानुरोधेन तदनवयवत्वं साध्यम्, तद्विषयकप्रतीत्यविषयत्वं हेतुः । न चासिद्धिः, बोध्यबोधकयोर-

भेदेन बोध्यविषयकप्रतीत्यविषयत्वात् । वस्तुतस्तु बोधकानवयवत्वं साध्यम्; बोधके अनुपलब्धिर्हेतुः । तत्रासिद्धिमाशङ्क्याह— तदर्थभूत इति । बोधके उपलम्भे बोध्ये कदाचित्तद्दर्शनापत्तिरिति भावः । एवं चानुबन्धानां स्वबोध्ये कार्यविशेषज्ञापनार्थैव स्वसमीपे उच्चारणम्, न तु विधेयत्वाभिप्रायकम् । समुदायाद्विभक्त्युत्पत्तिस्तु सौत्रत्वादिति फलितम् । यद्यपि अनुबन्धानां बोधकावयवत्वेऽपि बोध्ये अनुपलब्धिः पूर्वोक्तप्रकारेण निर्वहति, तथापि तदनभिज्ञानेन एतद्ग्रन्थप्रवृत्तेरदोषः ॥ परसमीपेति । यद्यपि इत्संज्ञाप्रवृत्तेः पूर्वमनुबन्धत्वाभावेन अनेकान्तत्वाप्रसक्तेरिदं व्यर्थम्, धुडित्यस्यैव च प्रातिपदिकत्वेन मुख्यं तदवयवत्वं चानुबन्धानाम्, तथापि अनुबन्धपदमनुबन्धत्वयोग्यपरम् । प्रातिपदिकत्वं च निर्मुक्त एवास्मिन्कल्पे ॥ आदितश्चेति । यद्यपि सर्वत्रानुबन्धनिर्देशे शिदादिपदानां तत्परत्वम् । तथा चादित्पदस्यापि तद्बोध्यपरत्वेन नात्र दोषः, तथापि सति संभवे आदित्परमेव स्यादिति भावः ॥ एकजातीयसंबन्धेनेति । संयोगेनेत्यर्थः ॥ नैवमिति । शास्त्रे घटकतया अन्यत्र बोध्ये स्वप्रतियोगिकाभावसंबन्धेनेत्यर्थ इति कश्चित् । वस्तुतस्तु तदेकान्तत्वे साध्ये तत्रोपलब्धिनियामकसंबन्धजातीयसंबन्धेनान्यत्रानुपलम्भो हेतुः । व्यतिरेकव्याप्तिप्रदर्शनाय च— 'अनवयवो हि' इति ग्रन्थः । 'नैवमयम्' इति च पक्षधर्मतोपपादनार्थः । नन्वेकस्यैव तन्त्वादेरेकजातीयसंबन्धेन खण्डमहापटयोर्दर्शनेन नेदं युक्तमिति चेत्, न; तावताप्येकजातीयसंबन्धेन अनेकत्रोपलभ्यमानत्वस्य अनवयवत्वव्यापकत्वाक्षतेः । ननु सत्प्रतिपक्षे कस्यापि न सिद्धिरित्यत आह— किं चेति । तथा च प्रतिकूलतर्कपराहतमवयवत्वानुमानम्, न त्वनुकूलतर्कोपेतमिति भावः ॥ अप्रयोजकत्वं चात्र, बोधकस्यानुबन्धघटितत्वेऽपि निर्मुक्तस्य बोध्यत्वोपपादनात् । ननु अन्त्यत्वप्रयुक्तेत्संज्ञाभाजां पूर्वोपकारकत्वमेवेति दृष्नचश्चकारेण कल्प्यतामत आह— तस्येति । पूर्वोक्तार्थज्ञापनापेक्षया एकान्तत्वज्ञापनमेव लघ्विति भावः । एतेनानुमानभिन्नं प्रमाणमप्येकान्तत्वे दर्शितम् । अत्र वदन्ति— 'नानुबन्धकृतमनेकाल्त्वम्' इत्यादिपरिभाषात्रयाकरणप्रयुक्तलाघवा-

नुरोधादनेकान्तत्वमेव न्याय्यमिति, तन्न; तदनुबन्धकपरिभाषया 'अत्व-सन्तस्य—' इत्यत्र मतुपो ग्रहणानापत्तेरिति दिक् ॥ नकारेत्संज्ञकेति । अनुबन्धाः संज्ञायामानर्थक्यात्संज्ञिनि फलन्तीत्यभिप्रेत्येदम् । न त्वयं शब्दार्थः, 'न विधौ परः शब्दार्थः' इति सिद्धान्तात् । यद्वा अनुबन्धविनिर्मुक्तपदार्थोप-स्थितिविचारावसरे यद्वेत्यादिकल्पोक्तरीत्यात्रोपपत्तिर्बोध्या ॥ अनुवाद इति । अत्र यद्वक्तव्यं तत्प्रागुक्तम् । 'आटश्च' इति सूत्र एव आटोऽच्परकत्वा-दाह— नेष्यत इति । चादीनां प्रत्ययादीनामित्संज्ञाविधानेनादिमे अप्रवृत्ता-वन्त्यग्रहणं व्यर्थमित्यभिप्रेत्य शङ्कते— अन्त्यं किमिति ॥ वाचाल इति । लित्त्वं पक्षे 'लिति' इत्यस्य प्रवृत्त्यर्थं स्यादिति भावः ॥ आद्यत्वं चेति । एतद्विशेषणफलं तु आम इत्यादौ उच्चारणेऽन्त्यस्य मस्येत्संज्ञाभावः । अत्र शास्त्रे सर्वत्र भावसाधन उपदेशशब्द इति प्राचां मतं दूषयितुम्, अत्र करण-साधनोऽन्यत्र च भावसाधन इति स्वमतमुपपादयितुं चाह— परे त्विति । उपदिश्यमानसजातीयत्वविवक्षायाम् 'सनः सनि उपदेशाभावादित्संज्ञा न स्यात्' इति वक्ष्यमाणभाष्यविरोधः । क्तवतोरुपदेशाभावेन इत्संज्ञानापत्तिश्च ॥ इत्त्वाना-पत्तिश्चेति । इदं चिन्त्यम्, उत्तरसूत्रे उपदेशपदासंबन्धस्य स्वेनैव वक्ष्यमाणत्वेन एवं प्रश्नाशयस्यावर्णनीयत्वात् ॥ अत एवेति । औपाधिकभेदाङ्गीकारादेवे-त्यर्थः ॥ संकीर्णत्वमिति । 'उपदेशेऽच्—' इति सूत्रस्थस्य लोकव्यवहारेण संकीर्णतोपपादकभाष्यस्य प्रत्यक्षाख्याने उपदेशपदार्थत्वाभावतात्पर्यकत्वे 'आ-देचः—' इति सूत्रस्थेन 'उद्देशश्च प्रातिपदिकानां नोपदेशः' इति भाष्येण विरोधापत्त्या तस्य तदर्थत्वेऽपि प्रकृते न तद्विवक्षेत्येव तदाशये वाच्ये तत्र च हेत्वाकाङ्क्षायां पूर्वोक्तलक्ष्यासिद्धेरेव वक्तव्यतया संकीर्णत्वोपपादकभाष्यविरोधः, तत्सूचितपूर्वोक्तलक्ष्यासिद्धिश्च तव प्रसज्येतेति भावः ॥ एतद्व्यावृत्तिश्चेति । स्वत एवास्य परिनिष्ठितत्वेन न किंचित्परिनिष्ठितप्रयोगशासनकरणत्वमस्य । स्वान्यनिमित्तकत्वं स्वतोऽपरिनिष्ठितत्वं वा उपदेशत्वं फलितमिति भावः ॥ व्यर्थमिति । फलमग्रे वक्ष्यामः ॥ अन्त्यपदसामर्थ्येनेति । न चादिव्यावृत्तिस्त-

त्फलम्, 'चुटू' इत्यादिनेत्संज्ञाविधानेन तद्व्यावृत्तिसंभवात्; सर्वस्य वर्णस्योच्चारणोत्तरं विरम्य वर्णान्तरोच्चारणेन विरामसंबन्धाख्यान्त्यत्वस्य प्रदीपादावेवोक्तत्वाच्च ॥ अत एवेति । उत्तरार्थतया साफल्योपपादनसंभवे अस्थितपक्षाश्रयणेन प्रयोजनोद्भावनं तव मतेऽयुक्तम्; मम तु तस्योत्तरार्थत्वाभावेन सर्वथा नैष्फल्यसूचकतया तद्युक्तमिति भावः । न धातुलोपसूत्रस्थभाष्यविरोधं परिहरति— धातुत्वादियोग्येति ॥ पृथग्ग्रहणमिति । ननु पूर्वं सूत्र एवेत्संज्ञाप्रवृत्तेरुक्तत्वेन सूत्रस्थस्य च प्रातिपदिकत्वेन तेनैव संग्रहे इतरत्सर्वं व्यर्थमिति चेत्, न; एतद्भाष्यबलेन लक्ष्यघटकस्येत्संज्ञेति पक्षान्तरस्यापि भाष्याभिप्रेतत्वकल्पनात् । 'उपदेश एवानुबन्धलोपे कृते ततो धातुसंज्ञा' इति न धातुलोपसूत्रस्थभाष्यकैयटग्रन्थसंदर्भोऽपि अत्रैव कल्पे स्वारसिकः । अभेदविवक्षया धात्वादीनामप्रातिपदिकत्वाद्वेति दिक् ॥ इत्यादिनेति । आदिना कुण्डिनच्चित्रङादीनामित्संज्ञानापत्त्यापादकाग्रिमभाष्यपरिग्रहः । प्रदीपोक्तं तदुत्थानं दूषयति— एतदिति । दीक्षितोक्तं दूषणान्तरमुपन्यस्यति— नन्वेवमिति ॥ पञ्चमीनिर्देशो बलवानिति । पञ्चमीनिर्देशपदं स्वस्वप्रयोज्यप्रवृत्तिकशास्त्रोभयपरं शक्तिलक्षणाभ्याम् । तत्र परत्वं शास्त्रे, नैष्फल्यरूपमनवकाशत्वं तु निर्देश इति बोध्यम् । अयं भावः— आगमादेशादिविधौ पञ्चमीसप्तम्युभयनिर्देशे षष्ठ्यनिर्देशे च कस्य कार्यमिति संदेहे 'अलोऽन्त्यस्य' इत्यादिवत् वाक्यैकवाक्यतया स्वस्वनिमित्तवशात्प्राप्तयोः परिभाषयोः कया व्यवस्थेति संदेहे परत्वात् 'तस्मादित्युत्तरस्य' इत्यनयैव व्यवस्था । आवृत्त्या प्रकल्पनत्वपक्षस्तु नाद्यापि सिद्धः; किं त्वग्रे वक्तव्यः स इति न तदभिप्रायकोऽयं ग्रन्थ इति । यद्यप्येतदप्राप्तियोग्ये प्रवृत्तिरहितत्वरूपमनवकाशत्वं विधेयगतं बाधकत्वे प्रयोजकम्, न नैष्फल्यरूपं निर्देशगतं मानाभावात्; तथापि षष्ठ्या निर्देष्टव्ये तन्निर्देशसामर्थ्यात् तस्य कार्यित्वाभावकल्पनेन कार्यित्वव्यवस्थापकपरिभाषाया अप्रवृत्तिसिद्धिः । सुराच्छायेति निर्देशोऽप्यत्र गमकः । न च निरवकाशत्वस्योक्तत्वे 'शि तुक्' इत्यादौ सप्तमीनिर्देशस्य तदनापत्तिरिति वाच्यम्, अर्धमात्रालाघवा-

त्प्रतिपत्तिगौरवस्यासह्यतया नैष्फल्यस्य सुस्थत्वात् । यद्वा तत्तद्विभक्त्यर्थस्यान्यकार्येऽनाश्रयणरूपमप्यनवकाशत्वं बाधकत्वे बीजम्, सुराच्छायेति निर्देशात् ॥ दोषः शङ्कित इति । इत्संज्ञानापत्तिरूपः ॥ व्याहतेति । उपदेश इत्युच्यमान इत्युक्तिर्व्याहतेत्यर्थः । प्रवृत्त्यन्तराभावादिति । असिद्धस्योद्देश्यत्वासंभवात्परिभाषाया अप्रवृत्तौ एभ्यः सनिति वाक्यार्थबोधे पुनस्तत्संवलितवाक्यार्थबोधो नेति भावः । अ इ उणादयो धात्वादिषु कतम इत्यत आह— अ इ उणित्यादीनामिति ॥ आहुरिति । अयमत्र प्राचीननव्यमतयोर्निष्कर्षः— 'तस्मिन्—' इति सूत्रस्थभाष्यात् 'हलन्त्यम्' इति सूत्रे उपदेशपदानुवृत्तिः । तच्च भावसाधनमिति दीक्षितस्य मतम् । उपदेशपदं नानुवर्तते; तच्च करणसाधनमत्रत्यभाष्येभ्य इति नव्यमतम् । अत्र वदन्ति— उपदेशशब्दः सर्वत्र करणसाधनः । 'उद्देशश्च प्रातिपदिकानां नोपदेशः' इति 'आदेचः—' इति सूत्रस्थभाष्यं त्वेकदेश्युक्तिः, प्रत्याख्यानस्य संकीर्णलोकव्यवहारेण उपदेशपदार्थतायाः 'उपदेशेऽच्—' इत्यत्र भाष्ये खण्डितत्वात् । न च तद्भाष्यं प्रकृतसूत्रद्वयाभिप्रायकम्, तथा सति लक्ष्यासिद्धेरेव वक्तव्यतया संकीर्णलोकव्यवहारेण उद्देशोपदेशयोः पर्यायतोक्तेरयुक्तेः । न च उपदेशे शास्त्रे य एजन्त उच्चारित इत्यर्थे धेट आत्वानापत्तिः, 'गोपयसोर्यत्' इत्यादौ गवादीनामुच्चारितत्वेनात्वापत्तिश्चेति वाच्यम्, 'नानुबन्धकृतमनेजन्तत्वम्' इति परिभाषया आद्यदोषनिवारणात् उपदेशे य एच् तदन्तस्येत्यर्थसंभवाच्च प्रत्यासत्त्या यस्यात्वं तदुपदेशकरणे शास्त्रे यः पाणिनिनोच्चारित इत्यर्थेन द्वितीयदोषवारणात् । एवम् 'उपदेशेऽत्वतः' तास्यनुदात्त—' इत्यादौ शास्त्रे योऽत्वानित्यादिक्रमेणार्थः । अस्तु वान्यत्र यथा तथा; प्रकृते तु करणसाधन एव । किं च 'इको गुण—' इति सूत्रे व्यञ्जनस्य सानुनासिकं गुणमाशङ्क्य पररूपेण शुद्धो भविष्यतीति भाष्यं व्याकुप्येत, तद्रीत्या आदेशत्वेन इत्संज्ञालोपाभ्यामेव तन्निवृत्तेः । उत्तरसूत्रे च उपदेश इत्यनुवर्तते । अत एव तस्मिन्निति सूत्रे प्रकल्पकत्वपक्षे 'उपदेशाभावादित्संज्ञा न स्यात्' इति भाष्ये उक्तम् । न चैतद्भाष्यमेकदेश्युक्तिरिति वाच्यम्, प्रक्लृप्तिवादग्रन्थ

स्यैकदेशयुक्तित्वेऽपि तद्दूषकग्रन्थस्यातथात्वात् । यदंशे बाधकं तदंशे एकदेशयुक्तित्वेऽपि सर्वांशे तत्त्वे मानाभावाच्च । शास्त्रं च धातुसूत्रे एव, न त्वागमादेशादि । अत एव च 'अइउण्' इति सूत्रे भाष्ये एकस्य नानालिङ्गकरणे सर्वेषां निवृत्तिर्न स्यादनन्त्यत्वादित्युक्तम् । त्वद्रीत्या हि उत्सृष्टानुबन्धस्यापि प्रत्ययतया तदसंगतिः । किं च 'आमोऽमित्त्वमदन्तत्वात्' इत्यभियुक्तोक्तिविरोधः । किं च थमोरुकारस्य मकारपरित्राणार्थत्वानुपपत्तिः । किं च शत्रादीनां तादेरित्त्वापत्तिर्दुर्वारा । किं च 'उपदेशोत्तरकाला इत्संज्ञा' इति 'नाज्झलौ' इति सूत्रस्थभाष्यासंगतिः, प्रातिपदिकत्वाद्युत्तरमेव इत्संज्ञाप्रवृत्तेः । किं च 'न धातुलोपे' इत्येतत्प्रत्युदाहरणस्य लवितेत्यस्य भाष्योक्तस्यासंगतिः स्यात् । न च धात्वादिपदं धातुत्वादियोग्यपरम्, सानुबन्धे तदभावात् । न च योग्यघटितपरं तत्, तथा सति 'ण्वुल्तृचौ' इत्यत्र ण्वुल्त् इति संघातान्तस्य इत्संज्ञापत्तेः । मम तु उपदेशने शास्त्रे य उच्चारितस्तत्र योऽन्त्यः स इत्संज्ञो भवतीति वाक्यार्थाङ्गीकारान्न पूर्वोक्ताः क्षुद्रोपद्रवाः । शास्त्रे चोच्चारितकिंचित्समुदायान्त्यत्वं सर्वत्राविशिष्टमिति 'व्यवसितान्त्यमिति वक्तव्यम्' इति वार्तिकमारब्धम्; व्यवसिताश्च धात्वादय इति व्याख्यातम् । धात्वादिपदं च तद्योग्यपरमेव, न तु तद्घटितपरम् । अनुबन्धानां चैकान्तत्वेन सानुबन्धेऽपि तद्योग्यता सूपपादा । शास्त्र एवेत्संज्ञेति कल्पेऽपि आनुमानिकस्थान्यादेशभावेन सोऽयमिति प्रत्यभिज्ञया वा तत्र तद्योग्यत्वम् । ण्वुल्तृजादौ तु पदस्यैव पदान्तरान्वयेन तान्तसमुदायस्य प्रत्ययादिसंज्ञानन्वयित्वेन न तद्योग्यत्वम् । धातुत्वादियोग्यघटितत्वादिति वदता त्वया तु नेत्थं वक्तुं शक्यम् । किं चानुमानिकस्थान्यादेशभावेऽपि इत्संज्ञापत्तिः, यथा 'बहोर्लोपः—' इति लोपे । किं च राजा तक्षा अहन्नित्यादौ नवेत्संज्ञा दुर्वारा, 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्यस्य प्रत्ययविधिविषयतया ञ्निदन्तत्वस्य सुलभत्वात् । मम तु शास्त्रोच्चारितधातुत्वादिपरिच्छिन्नसमुदायानन्त्यत्वान्न तदापत्तिः । न च 'नलोपः प्रातिपदिकान्तस्य' इति वैयर्थ्यम्, तेनाप्युपदेशपदानुवृत्तिज्ञापनौचित्यात् । न च प्रातिपदिकप्रतिषेधारम्भेण प्रतीकारः, कुण्डिनचित्रङ्गादावित्त्वानापत्तेः । किं च त्वन्मते

शास्त्रपदेन धात्वादीनां ग्रहणे अभ्र आँ अप इत्यादावादेशान्त्यत्वेन इत्संज्ञा दुर्वारा । न च पूर्वोक्तरीत्या निर्वाहः, फलाभावादित्संज्ञा न भविष्यतीति शङ्कायाम् 'अनेकान्ताः' इति पक्षमाश्रित्य अभ्र आँ अटित इत्यादौ इट्प्रतिषेधात्मकं फलं स्थिरीकृत्य इत्संज्ञायां शङ्कितायाम् 'सिद्धं तूपदेशनेऽननुनासिकः' इति वार्तिकस्य प्रवृत्त्या 'लोपश्च' इति शकारस्यैव इट्प्रतिषेधद्वारा विशिष्टप्रयोगशासनकरणत्वस्य स्वतोऽपरिनिष्ठितत्वस्य च सत्त्वात् स्वतोऽपरिनिष्ठितत्वस्य चाशब्दार्थत्वाच्च स्वतःपरिनिष्ठितत्वेऽपि लुप्तयकाराभ्रशब्दघटितप्रयोगसाधनकरणत्वस्य संभवात् । न चैवं शतृशानच्क्तक्तवतुक्यबादीनां पैतृष्वसेयादौ ढकः कस्य सोरुकारस्य 'बाह्वादिभ्यश्च' इति विहितेञादीनां चेत्त्वानापत्तिः, शास्त्रेऽनुच्चारितत्वात् । 'लटः शतृशानचौ—' इत्यादावुच्चारितास्तु भिन्ना एवेति वाच्यम्, सर्वत्रानुबन्धविनिर्मुक्तोपस्थितेः स्वीकारेणादोषात् । अत एव 'क्तक्तवतू निष्ठा' इति सूत्रे 'समानशब्दानां प्रतिषेधः । लोतो गर्तः' इत्यादिवार्तिकभाष्यग्रन्थसंदर्भ उपपद्यते । उच्चारिततत्स्थान्यन्यतरविवक्षणे च सावित्संज्ञा सुलभा । पैतृष्वसेयादौ शुभ्रादित्वात् ढक् । अनुवृत्तिश्च तज्जातीयपदस्योच्चारणमेव । निष्ठासंज्ञायाः कार्यकालपक्षे विध्येकवाक्यतया उपदेशशास्त्रे उच्चारितत्वं क्तक्तवत्वोरपीति तत्रेत्संज्ञा सुलभा । एतेन क्तवतोः कुत्राप्यविधानेनेत्संज्ञायास्तत्राप्रवृत्तौ नानुबन्धविनिर्मुक्तोपस्थितिरिति परास्तम् । भावसाधनत्वे तु एतद्दोषाणामनवसर एव । तत्तदानुपूर्वीविशेषरूपेणोपस्थानरूपस्य प्रत्यक्षमाख्यानस्य तदर्थत्वे सदादिशब्दविहिते निपातनाद्यनुमिते अनुवर्तिते स्वादौ च तत्सत्त्वेनादोषात् । 'आङ्गेऽनुनासिकः—' इत्यादौ 'गुप्तिज्किद्भ्यः सन्' इत्यादौ च न तथोपस्थितिः । न चैवं चेतेत्यादौ आत्वापत्तिः गुणशब्देन तथोपस्थापनादिति वाच्यम्, तत्रोपदेश इत्यस्य एजन्तधातुविशेषणत्वेनादोषात् । तस्मात्प्राचां मतमपि निर्दुष्टमेव । परं तु भाष्यकृता उक्तेऽर्थे संकीर्णव्यवहारेण शक्तेः खण्डितत्वादस्माभिरुपेक्षितम् । न चोपदेशशब्द आद्योच्चारणपरः, एतद्भाष्यबलेन तस्य तत्रानभिधानात् लोके तस्य तत्राप्रयोगाच्च । न च बाहुलकमगतिकगतिरिति दीक्षितोक्तं युक्तम्,

एतद्भाष्येण तत्र तस्य साधुत्वानुमानात् स्थानिवत्सूत्रे कौस्तुभे 'यद्धर्मवैकल्यप्रयुक्तोपदेशाप्रवृत्तिः' इति त्वयापि प्रयुक्तत्वाच्च । इत्कार्याभावादित्संज्ञा न भविष्यतीति परिहृत्य 'इदमस्ति इत्कार्यम् अभ्र आँ अटितः' इत्यस्थितपक्षे प्रयोजनकथनं तदन्यथासाधनाय न्यासान्तराद्याश्रयणं च उत्तरसूत्रे उपदेशपदानुवृत्तिं सूचयति । त्वद्रीत्या हि फलाभावादेवेत्संज्ञावारणे सर्वोऽप्ययं प्रयासो व्यर्थः स्यात् । वस्तुतस्तु 'लोपश्च' इत्यादौ शकारस्येव अनुनासिकसामर्थ्यादेव इट्प्रतिषेधकता स्यादिति भाष्याभिप्रेतम्, न त्वस्थितः पक्ष इति भाष्याशयानवबोध एव ते, 'प्रातिपदिकप्रतिषेधोऽक्तत्तद्धिते । उदश्वित् शकृत्' इत्यादिवार्तिकभाष्येण 'अग्रहणप्रातिपदिकानामुपदेशः कर्तव्यः' इति पस्पशाह्निकान्तस्थभाष्योक्तरीत्या शास्त्रोच्चारितप्रातिपदिकान्त्यत्वादव्युत्पत्तिपक्षे भवत्वित्यादिवद्गणपाठमात्रेण त्यदादीनामप्युपदेशत्वाद्वा इत्संज्ञाप्राप्तिरित्यभिप्रेत्य प्रवृत्तेः । वस्तुतस्तु कुण्डिनचित्रङादीनामित्संज्ञानापत्त्या तदुत्तरभाष्येणैव तद्वार्तिकं दूषितम् । राजा तक्षेत्यादौ व्यपवर्गाभावान्नित्स्वरो नेत्यादिभाष्यं तु ल्वन्नादौ स्वरवारणाय अपूर्वप्रत्ययग्रहणकर्तव्याभिप्रायकमिति ॥ आनुनासिक्यवन्त इति । 'असुब्वतः' इति भाष्यप्रयोगेण क्वचिल्लाघवानादरस्यापि सूचनादिदं साधु । 'सर्वप्रातिपदिकेभ्यः' इत्यादिविहितानामनुनासिकत्वायाह— पाणिनिप्रभृतीति । लण्सूत्रस्थाकारेऽनुनासिकत्वमप्रामाणिकमिति भावः ॥ यणापत्तिरिति । ननु आङ्त्वात् 'यस्येति च' इति लोपापादनमुचितमिति चेत्, न; नासा क इति स्थिते दाक्षिकर्षुक इत्यादौ चारितार्थ्येन 'केऽणः' इत्यनेन लोपस्य परत्वात् बाधे सकृद्गतिन्यायेन पुनरप्रवृत्तेः ॥ इत्वविधानेति । ननु सत्यनेन इत्वे तत्स्थानिकयणः 'लोपो व्योर्वलि' इति लोपेन भाव्यम् । सत्यनेन यणि तु तस्यासिद्धत्वान्न लोपप्रवृत्तिरिति फलभेदान्न सामर्थ्यमिति चेत्, न; प्रक्रियालाघवाय लोप एव विधातव्ये इत्त्वविधिसामर्थ्यादिति तदर्थात् । न चेत्त्वस्यासिद्धत्वेन यणः प्राप्तिरेव नेति वाच्यम्, 'नाजानन्तर्ये—' इति तन्निषेधात् । 'इकोऽसवर्णे—' इति प्रकृतिभावेन इत्त्वसार्थक्यं तु न, भत्वेन पदत्वबाधात् ॥

शास्त्रबाधेति । प्रधानशास्त्रसंकोचरूपबाधेत्यर्थः ॥ अस्यार्थस्येति । गुणभूतादिरन्त्येनेतिशास्त्रसंकोचस्येत्यर्थः । गुणशास्त्रसंकोचनद्वारा प्रधानशास्त्रसंकोचेऽपि साक्षान्न तद्बाध इति तात्पर्यम् ॥ **ऊकालोऽच्** ॥ एकद्वित्रीति । एकादिनवान्तानां द्वन्द्वाभावस्य 'त्यदादीनि—' इति सूत्रे वक्ष्यमाणत्वेन 'एकद्विकरणे' इतिवदिदमसाधु ॥ प्रश्लेषनिर्देश इति । प्रश्लेषश्च उच्चारणाभावविशिष्टमनुसंधानम्, तत्प्रयोजको निर्देश इत्यर्थः ॥ सदृश इति । स्वोच्चारणकालमात्रे लक्षणायां तु तदधिकरणपुरुषान्तरीयोच्चारणविषयस्यैव संज्ञा स्यान्न त्वन्यकालोच्चारितस्य; अतस्तत्पर्यन्तानुधावनम् । सादृश्यस्य भेदघटितत्वेन उकारोच्चरणाधिकरणकालाधिकरणकोच्चारणविषये तदनापत्तिः । मात्रादयश्च सूक्ष्मक्षणगता धर्माः; तत्पुरस्कारेण च सादृश्यमिति बोध्यम् ॥ तुक् स्यादिति । ह्रस्वग्रहणं तु व्यञ्जनव्यावृत्त्यर्थं स्यात् । अज्ग्रहणे कृते तु पदलाघवाभावः । 'ह्रस्वनद्यापः—' इत्यत्र नद्याब्ग्रहणं तु नियमार्थं स्यात् । एवम् 'दीर्घात्' इति योगविभागोऽपि, अपदान्ताच्चेत् दीर्घादेवेति नियमसंभवात् । ह्रस्वप्रदेशे अज्ग्रहणेनैवोपपत्तौ ह्रस्वसंज्ञाविधानं तु 'ह्रस्वो नपुंसके—' इत्यादिविधिप्रदेशे दीर्घस्यापि विधेयत्वप्रतिपत्त्यर्थम् 'अचश्च' इति परिभाषोपस्थित्यर्थं च स्यादिति बोध्यम् । द्वन्द्वोपपत्तिस्तु नीलघटयोरभेद इत्यादिवत्सामान्यविशेषभावाद्यप्रतिसंधानेन बोध्या । ननु अणुदित्सूत्रे अशब्दसंज्ञेत्यनुवर्त्य शब्दशास्त्रीयसंज्ञायां सवर्णान् अण् न गृह्णातीत्यर्थेनादोष इति चेत्, न; 'उपदेशेऽजनुनासिक इत्' इत्यादौ सवर्णग्रहणाभावप्रसङ्गात् 'वृद्धिरादैच्' इत्यादौ सवर्णग्रहणमाशङ्क्य पञ्चमीसमासाश्रयणेन तद्वारणपरभाष्यासंगतेश्च । ननु 'उच्चरितः शब्दः प्रत्यायकः' इति सिद्धान्तात् कथं सवर्णग्रहणप्रसङ्गः । उकालोऽच् ह्रस्व इति वाक्ये उच्चार्यमाणत्वेन तत्त्वे तु 'इको यणचि' इत्यादावपि तथात्वापत्त्या तत्रत्यशब्दरत्नासंगतिः । 'य्वोः' 'यस्य' इत्याद्यनुरोधेन अण्बोधकं स्वबोध्यसवर्णग्राहकमित्यर्थे तु 'पुमः खयि—' इत्यादावम्पदेन चछादीनां ग्रहणापत्तिश्चेति चेत्, न; भग्नदन्तोच्चारिते घटादिपदे पटादिपदत्वभ्रमदशायां पटविषयकशाब्दबोधार्थमुच्चरि-

तत्त्वेनानुसंधीयमानस्यैव प्रत्यायकतया प्रक्रियावासनावतां स एवायमित्युच्चरितत्वेनानुसंधीयमानत्वस्याक्षतत्वादित्याशयात् ॥ अधिकमिति । यत्तस्येति शेषः । अग्रे 'इत्यर्थेन' इत्यस्य तज्ज्ञापकत्वेनेत्यर्थः । इदं चिन्त्यम्, शब्दाधिक्यादर्थाधिक्यापत्तेः व्याख्यानमाश्रित्य श्रौतपदप्रत्याख्याने अतिप्रसङ्गाच्च । तस्मादणुदित्सूत्रेणाष्टादशसु शक्तत्वबोधनेऽपि लक्षणया मात्रिकोकारोच्चारणाधिकरणकालसदृशस्य बोधनेनादोषात् स्वबोधकोच्चारणाधिकरणकालसदृशत्वस्यैव शक्यसंबन्धत्वसंभवात् लक्षणायां कालग्रहणस्यैव तात्पर्यग्राहकत्वात्; तदभिप्रेत्योक्तम्—यावत्तपरकरणं तावदत्र कालग्रहणमिति । यावत्कार्यसंपादकं तपरकरणम्, तावत्कार्यकारि कालग्रहणमिति तदर्थः । तत्त्वं च लक्षणायां तात्पर्यग्रहजननद्वारेति बोध्यम् ॥ जातिग्रहणस्येति । जात्याश्रयैकानेकव्यक्तिग्रहणस्येत्यर्थः । केचित्तु जातिपक्षे ऊकारत्वादेर्व्यक्तिद्वारा जातौ सत्त्वात् तस्या एव संज्ञाविधानेन तत्र च फलाभावात्तत्प्रयुक्तकार्यस्य तदाश्रयेष्वेव वाच्यतया तदाश्रयत्वस्य सर्वव्यक्तिष्वविशेषात्सर्वत्र संज्ञात्रयविधानस्यैव वैयर्थ्यात् यद्व्यक्त्यन्तर्भावेण उकारत्वं तद्व्यक्तौ ह्रस्वत्वप्रयुक्तं कार्यमिति रीत्या तत्परिष्कारात् तितउ इत्यत्र वर्णद्वयान्तर्भावेण ऊकारत्वस्य अच्त्वे सत्त्वाद्वर्णद्वयस्य दीर्घसंज्ञापत्तिरिति भाव इत्याहुः ॥ असार्वत्रिकत्वादिति । लक्षणया सदृशबोधकत्वेन वर्णबोधकत्वाभावात् न दोष इति तत्त्वम् । ननूपदस्य स्वोच्चारणकालसदृशे लाक्षणिकतया सादृश्यस्य च उच्चारणानधिकरणकालाव्यवहितत्वविशिष्टमात्रत्वादिना आश्रयणान्न दोष इति चेत्, न; एवंविधसादृश्याश्रयणे मानाभावात् ॥ श्रुतीति । ध्वनिकृतमित्यर्थः ॥ अन्यत्रापीति । तुल्यास्येत्यादौ । वर्णस्य नित्यत्वादाह— प्रयत्नेति ॥ अविद्यमानत्वाच्चेति । इदं स्वरविधावित्यस्याप्युपलक्षणम् । तथा चाचः स्थाने आन्तर्यादच एव प्रवृत्त्या हलां चाविद्यमानवत्त्वेन उक्तसंज्ञायामपि क्षत्यभाव इति भावः । मूले उदात्तानुदात्तत्वे इति । द्वन्द्वस्य हि साहित्यसमानाधिकरणोक्तधर्मद्वयं निमित्तमिति धर्मद्वयबोधकत्वम् । नव्यमते उद्भूतावयवभेदविशिष्टसमुदायस्यैव समासार्थत्वेन उदात्तत्वानुदात्तत्वरूपेणैव समुदायस्य भानमिति धर्मद्वयस्यैव प्रवृत्तिनिमि-

त्तत्वमिति बोध्यम् ॥ त्रिपाद्यामपीति । अत एव एकश्रुतिं प्रति स्वरितस्य सिद्धत्वा-
त्स्वरितमेशब्दात्परेषां गङ्गे इत्यादीनामेकश्रुतिः ॥ वेदे त्विति । इदं तु
ऋग्वेदातिरिक्तवेदपरं लोकपरं चेति भावः ॥ छान्दसत्वादिति । अहिरिव
भोगैरित्यादौ आद्युदात्तत्वस्य च्छन्दसि व्यत्ययेन सुसाधत्वात्तदनुरोधेन गण-
विशेषपाठकल्पनायां मानाभावात् । 'फिषः' इत्यन्तोदात्तत्वे 'उदात्तयणः—'
इत्यस्य प्राप्तिरिति भावः । नन्वाद्युदात्तत्वे 'उदात्तादनुदात्तस्य—' इति
स्वरिते यणः परत्वादेव स्वरितः सिध्यति, उदात्तयणोऽभावेन 'उदात्तयणः'
इत्यस्याप्राप्तेः । एवं चाहिरिवाद्य इति प्रयोगद्वयेऽपि च्छान्दसत्वकल्पना
नेत्येतदेव गणविशेषपाठे मानमिति चेत्, न; 'उदात्तस्वरितयोः' इत्येत-
दृष्ट्या 'उदात्तादनुदात्तस्य' इत्यस्यासिद्धत्वेन स्वरितानापत्तेः । एतेन स्वरितो-
ऽप्युदात्तोऽस्तीति 'अनुदात्तं पदम्' इति सूत्रस्थभाष्यरीत्येदम् । वस्तुत
उदात्तस्वरितयोरित्यत्र स्वरितपदवैयर्थ्यप्रसङ्गात् उदात्तसंज्ञकस्यैव ग्रहणौचित्याच्च
शङ्कासमाधाने निर्दले इति पाठकोक्तमपास्तम्, खलप्वाशेत्यादौ स्वरितस्या-
सिद्धत्वेन उदात्तबुद्ध्या यणोऽप्रवृत्त्या स्वरितग्रहणाभावे उदात्तयणोऽभावेन
स्वरानापत्त्या स्वरितग्रहणस्य चारितार्थ्यात् । विस्तरस्तु स्वरप्रकरणे स्फुटी-
भविष्यतीति दिक् ॥ कर्मणीति । इदं वृत्तिकाराद्यनुरोधेन । भाष्ये तु करणे
ल्युट् बहुव्रीहिसमासश्चेत्युक्तम् ॥ यमानुस्वाराणामेवेति । अब्भक्षन्यायेनेति
भावः । यमानां तु पञ्चमे परे एव प्रयोगेणापादनमसंभवि; विड्नोरित्याद्यनु-
वादप्रदेशेषु तु सामर्थ्याल्लोकप्रसिद्धानुनासिकस्यैव ग्रहणमिति भावः । वस्तु-
तस्तु यमांशे अनुनासिकसंज्ञायां फलाभावादनुस्वारमात्रस्यैव तत्त्वे लाघवा-
त्प्रदेशेषु अनुस्वारग्रहण एव कर्तव्ये संज्ञाविधानसामर्थ्येन प्रासादवासिन्याय-
स्यैवाश्रयणेन सिद्धे मुखग्रहणं शक्यमकर्तुम् । नन्वयं योगो व्यर्थः योगेनैव
निर्वाहादिति चेत्, अत्राहुर्विवरणकृतः— अनु पश्चान्नासिका व्याप्रियते
यस्मिन्निति योगस्य ञमङणनेषु निरूपयितुमशक्यत्वात् विनिगमनाविरहेणो-
भयोर्व्याप्तेः । एतेन अनु पश्चान्नासिकां गत इत्यर्थको नासिकामनुगत इति

योगः परास्तः । यथाकथंचिद्योगाश्रयणे तु रूढिरेव फलिता । तथा च रूढशब्देषु प्रासादवासिन्यायाभावात् ञमामग्रहणापत्तिरिति सूत्रमावश्यकमित्याहुः । नन्वष्टादशत्वमनुपपन्नं धर्माणामष्टादशत्वाभावादत आह— तत्समानाधिकरणेति ॥ ऋकारघटिते ऋकारमात्रघटित इत्यर्थः ॥ **तुल्यास्य** ॥ व्याख्यानादिति । नासिका आस्यान्तर्गतेति पक्षे आस्यग्रहणसामर्थ्यादित्यपि बोध्यम् । अत एव तुल्यास्यसूत्रे भाष्ये आस्ये तुल्यदेशप्रयत्नमिति न्यासे 'किमास्योपादाने प्रयोजनम्? प्रयत्नविशेषणमास्योपादानम्' इति संगच्छते ॥ स्थानमेवेति । न तु श्वासादिकमित्यर्थः । अत्र प्रमाणमाह— प्रयत्नस्येति ॥ भेदघटितेति । वस्तुतस्तु धर्मवत्त्वमेव सादृश्यम्; अत एव नञिवयुक्तमित्यत्रान्यग्रहणं सार्थकम् ॥ तद्रूपेणैवेति । तुल्यास्येति निर्देशाच्चेत्यपि बोध्यम् ॥ निर्देशादिति । विवृतत्वव्याप्यधर्माणां सावर्ण्यानुपयुक्तत्वमिति मतेनेदम् । वस्तुतस्तु तद्वानिति निर्देशो ज्ञापकतया बोध्यः । नासिका आस्यबहिर्भूतेति स्ववर्गीयैः पञ्चमानां नासावर्ण्यप्रसङ्ग इति भावः ॥ तोर्लीति नेति । ननु ऌकारप्रश्लेषणान्नात्र दोषः । एवमतो ऌन्तस्येत्यत्रापीति चेत्, न; यल्लोकमित्यादौ परसवर्णेन वकारस्याप्यापत्तेः, देविल्वित्यादौ 'रलो व्युपधात्—' इत्यापत्तेश्च ॥ भाष्य इति । यद्यपि सवर्णसंज्ञावचनमनर्थकं स्यादित्येव तत्रोक्तम्, तथापि 'अणुदित्सवर्णस्य—' इत्याद्यर्थं सवर्णसंज्ञाया आवश्यकतया 'झरो झरि सवर्णे' इति सूत्रस्थं सवर्णपदमनर्थकमिति प्रदीपकृता तद्व्याख्यातमिति भावः ॥ स्थानांश इति । प्रयत्नमात्रग्रहणमिति पक्ष इति शेषः । आभ्यन्तरप्रयत्नग्रहणमिति पक्षे तु प्रयत्नांशेऽपि यावत्साम्यं विवक्षितमिति बोध्यम् । अत एव विवृतत्वसाम्येऽपि विवृततरादिभेदेन एदैतोः सावर्ण्यं वारितं भाष्ये ॥ कण्ठादीनामेवेति । आस्यभवत्वव्याप्यजातिविशेषवद्यावत्तौल्यग्रहणज्ञापनद्वारेति भावः । यत्तु— आस्यभवत्वव्याप्ययावद्वायुसंयोगतौल्यमेव कुतो न ज्ञाप्यते विनिगमनाविरहादिति, तन्न; तुल्यास्येति निर्देशस्यैव गमकत्वात् । यत्तु— यत्किंचिदास्यभवतुल्यत्वं कौस्तुभोक्तमेव युक्तम् । न चैवं ञमामपि परस्परं सावर्ण्यप्रसङ्गः । तथा च त्वं नयसीत्यत्र

परसवर्णेन ङाद्यापत्तिः, कण्ठादिस्थानमारभ्य नासिकापर्यन्तगामिनां तत्तदन्तरालरूपाणां तत्तत्स्थानत्वेन स्थानैक्याभावात् । न चैवं कङ्योरपि तदनापत्तिः, तत्तद्रेखारम्भककण्ठादीनां तत्तद्रेखाभेदाभावात् अनुस्वारस्य यमीति वक्तव्ये ययीति व्यापकप्रत्याहारनिर्देशाज्ज्ञापकात् । एतेनेकारोकारवकारादीनामेकारौकारलकारादिभिः सावर्ण्यापत्तिर्दत्तोत्तरा, कण्ठताल्वाद्यन्तरालरूपाणां कण्ठताल्वादिपदवाच्यानामतिरिक्तस्थानत्वस्य सुवचत्वात् । तद्वानिति निर्देशोऽप्यत्रैव मानम् । एवं च नैतौ तुल्यस्थानाविति यथाश्रुतभाष्यसंगतिः । एतेन 'दन्त्योष्ठ्यो वः स्मृतः' इति शिक्षापाठो व्याख्यातः, अन्तरालोपलक्षणवाचिपदसमुदायातिरिक्तस्य अन्तरालवाचित्वाभावात्तत एव प्रत्ययविधानादिति; तत्तुच्छम्, अदुह्वहीत्यादौ 'लुग्वा दुह—' इति लुगनापत्तेः वुवूर्षतीत्यादौ 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वानापत्तेः । दन्त्यादिशब्देन लुप्तपूर्वपदकदन्त्यादिशब्दस्य तन्त्रेण निर्देशे तु न मानम् । किं च 'अष्टौ स्थानानि वर्णानाम्' इति शिक्षोक्तसंख्यानियमभङ्गः । तावत्संख्यातिरिक्तानामुपलक्षणत्वाभावतात्पर्यकत्वं तु न युक्तम्, 'अष्टौ स्थानानि' इति शब्दस्वारस्यभङ्गापत्तेः । किं च तुल्यपरिमाणावेतावित्यादिव्यवहारबलेन यावत्साम्य एव गृहीतशक्तिकस्य तुल्यपदस्य लक्षणादिना यत्किंचित्साम्यार्थकत्वमन्याय्यम् । सादृश्यप्रयोजकधर्मोपादान एवोक्तनियमस्वीकारेण चन्द्र इव मुखमित्यादौ न दोषः । तेजसायं सूर्यसदृश इत्यादिस्तु गौणः । किं च नैतौ तुल्यस्थानावित्यस्य यत्किंचित्स्थानसाम्याभिप्रायकत्वे 'उदात्तादीनां तर्हि सवर्णसंज्ञा न प्राप्नोति' इत्यग्रिमभाष्यासंगतिः । किं च नासिकाया आस्यबाह्यत्वमभ्युपेत्य यावत्स्थानसाम्याभ्युपगमेनैव 'नैतो तुल्यस्थानौ' इति भाष्यसामञ्जस्ये अप्रामाणिकानेकरेखाकल्पनानौचित्यम् । 'आस्ये तुल्यदेशप्रयत्नमिति वक्तव्यम्' इति वार्तिकेऽपि आस्य इति देशविशेषणवैयर्थ्यम् । कुण्डं रथेनेत्याद्यर्थमनुनासिकपदानुवृत्त्यावश्यकत्वे यमीति वक्तव्ये ययीति व्यापकप्रत्याहारनिर्देशस्य यावत्स्थानसाम्यज्ञापकत्वस्यैवौचित्यात् । ननु 'किमास्योपादाने प्रयोजनम्? प्रयत्नविशेषणमास्योपादानम्' इत्यादिभाष्येण देश-

विशेषणत्वं नैव भाष्यकृत्संमतमिति चेत्, न; प्रयोजनप्रश्ने प्रयत्नविशेषणमित्यादिना प्रयत्नांशे फलमभिधाय देशांशे तत्कथनव्याजेन बाह्यप्रयत्नकथनान्ते 'आनुनासिक्यमेषामधिको गुणः' इति भाष्योक्तेः । अन्यथास्य विशेषणस्य व्यावर्त्यकथनावसरे तत्कथनासंगतिः । अत एव 'एवमप्यवर्णस्य संज्ञा न प्राप्नोति । बाह्यं हि आस्यात्स्थानमवर्णस्य' इत्याद्यग्रिमं भाष्यं संगच्छते ॥ सर्ववर्णेति । नन्वेवं सति इकारैकारयोरपि यावत्स्थानसाम्येन यावदास्यभवतुल्यत्वे 'यजुष्येकेषाम्' इति निर्देशेन ज्ञापितेऽपि पुनर्निर्देशासंगत्या यजुषीत्यादिपूर्वग्रन्थासंगतिरिति चेत्, न; एकारादीनां सकलसाधारणं कण्ठस्थानकत्वं बोधयता इकारादीनां च तद्बोधयता आचार्येण वर्णानामभिहितस्थानकत्वबुद्ध्यैव प्रक्रियाया निर्वाह्यत्वबोधनात् । एतदेवाभिप्रेत्यानुपदं वक्ष्यति— भिन्नस्थानकथनेत्यादि ॥ अत एवेति । रूढत्वादिवायोगवाहत्वोपपत्तिरिति भावः ॥ अनुवादकमिति । तत्फलं तु तेषामेव प्रक्रियोपयोगित्वबोधनम् ॥ जिह्वाग्रादाविति । तुल्यास्यसूत्रे भाष्यकैयटयोः स्पष्टमिदम् । प्रसङ्गाद्गुणशब्दार्थमाह— वर्णेति । मूले अनुनासिकाकारादीनां नासिकास्थानानुक्त्या तस्य करणत्वमेव मूलकृदभिप्रेतमिति भ्रमवारणायाह— अकारादीति ॥ तत्रत्येति । नासिकास्थेत्यर्थः ॥ सर्वस्येति । प्लुतस्य दीर्घस्य चेत्यर्थः । इदं पूर्वान्वयि ॥ प्लुतेति । गम्लित्यादौ ह्रस्वस्यानुनासिकत्वदर्शनादिति भावः ॥ अनुवादक इति । इदं लक्षणातात्पर्यग्राहकम्, न त्वप्रवृत्तिप्रयोजकं मानाभावात् । तपरकरणं त्वसंदेहार्थमिति बोध्यम् । एतेन अणुदिच्छास्त्राप्रवृत्तिशङ्का समाहिता ॥ एतेनेति । दन्त्योष्ठ्यमिति प्रत्येकं तत्स्थानत्वोक्त्येत्यर्थः ॥ दन्तोष्ठमिति । तत्समीपवर्तीत्यर्थः ॥ विवृततरविवृततमयोरिति । अगूष्मभ्यो विवृततरावेङाविति प्रयोगे विभक्त्व्योपपदकत्वनिमित्तकतरबन्तस्य वाक्यैकदेशन्यायेन प्रयोगः । एवं विवृततमशब्देऽपि । एतेन एकशेषाद्यापत्तिशङ्का समाहिता ॥ स्पृष्टादीनामिति । तज्जनकप्रयत्नानामित्यर्थः ॥ अपपाठ इति । जानीयादित्यध्याहारे अयमपि साधुः । ननु स्वराणामिति वाक्येनाचां विवृतत्वबोधनात् अचोऽस्पृष्टा इति व्यर्थमत आह— स्पर्शाभावरूपेति ।

तस्यैवेदं व्याख्यानमिति न पौनरुक्त्यमिति भावः ॥ तेषामिति । विनिगमनाविरहेण अस्पृष्टा इत्यस्यानुवृत्तिवत् स्पृष्टा इत्यस्याप्यपकर्ष इति भावः ॥ अर्ध इति । यण्संबन्धितयोक्तस्येषत्स्पर्शस्यार्ध इत्यर्थः; तत्फलितमाह— ईषद्विवृतत्वमित्यादि ॥ न सावर्ण्यमिति । प्रयत्नांशेऽपि यावत्तौल्यविवक्षणादिति भावः । अञ्चित इति । ननु यकारस्य नासिकास्थानत्वाभावेन स्थानत आन्तर्यस्य बलीयस्त्वात् ञकार एव भविष्यति । अत एव तुल्यास्यसूत्रे विवरणे सुँय्युँवे इत्यादौ सानुनासिकयकारमाशङ्क्य स्थानत आन्तर्यात् ञकार एवेत्युक्तमित्यरुचेराह— आदाविति । तेन राजॅल्लिखतीत्यादौ न नकारादिः परसवर्ण इति भावः ॥ प्रयत्नभेदादिति ॥ ननु अइउण्सूत्रे भाष्ये अस्मादेव ज्ञापकात्सर्वत्र मूलभूतो विवृत एवाकार इत्युक्त्या तुल्यास्येत्यादाविव स्वस्मिन्नपि स्वव्यापारसंभवेन चात्रापि विवृतस्य स्थाने संवृतादेशे दीर्घो दुर्वार इति चेत्, न; विवृतस्थानिकत्वे 'यस्येति च' इत्यादाविव संवृताकारेणापि विवृतस्यैव प्रत्ययापत्त्या तस्य विधाने सूत्रानर्थक्यप्रसङ्गेन एतद्विहितातिरिक्तस्यैव विवृतस्थानिकत्वज्ञापनात् ॥ **पूर्वत्रासिद्धम्** ॥ घत्वजश्त्वानुनासिकेष्विति । ननु गोदुह् इत्यवस्थायामझयन्तत्वेन वत्वाप्राप्तौ जश्त्वमपवादत्वाद्बाधित्वा घत्वेऽपि तदुत्तरं जश्त्वं निरवकाशत्वाद्बाधित्वाऽनुनासिकं चान्तरङ्गत्वाद्बाधित्वा भष्भावः सुलभः । न चासंभव एवापवादत्वमिति वार्त्तिकमते जश्त्वभष्भावयोर्युगपत्प्रवृत्तिसंभवेन जश्त्वानपवादत्वात्परत्वाज्जश्त्वेऽनुनासिके च तदनापत्तिरिति वाच्यम्, तथा सति विरोधस्याप्यभावेन परत्वोक्त्यसंगतेः । शिष्टादित्यादाविव स्वस्वनिमित्तानन्तर्यविघातमादाय तत्संभवे तु तथैव तदपवादत्वं तदवस्थम् । किं चोत्सर्गप्रवृत्त्युत्तरमपवादचारितार्थ्यस्यैवापवादत्वमूलत्वेन वार्तिककृदभिप्रेतत्वस्य 'प्रकृत्यैकाच्' इत्येतत्प्रत्याख्यानपरतत्सूत्रस्थभाष्यकैयटध्वनितत्वेन तत्त्वस्येह सत्त्वाच्च । अत एव च 'गणेरीत्वम्—' इति गुणो यङिति सूत्रस्थं भाष्यं गणेरन्त्यस्य णस्येत्यर्थाभिप्रायकतया विवरणे व्याख्यातम् । किं चैवं धुगित्यादावपि तदनापत्तौ पदान्ते भष्भावविधानवैयर्थ्यम् ।



किं च जश्त्वं बाधित्वानुनासिकत्वे तच्चान्तरङ्गत्वाद्बाधित्वा भष्भावे पुनरुक्तन्यायेन

जश्त्वाद्यापत्तौ चक्रकापत्तिः। एतेन भुदित्यादौ स्वसमकालप्राप्तजश्त्वबाधेन चरितार्थस्य भषो घत्वप्रवृत्तिसमये प्राप्तजश्त्वबाधकत्वे मानाभाव इति परस्वोक्तिसंगतिरिति पाठकोक्तमपास्तम्। किं चानुनासिकमपवादत्वाद्बाधित्वा 'झयः' इति वत्वं ततोऽपि परत्वात् भष्भाव इत्यादिरीत्या चक्रकापत्तिः। न च 'झयः' इति तान्ते चरितार्थम्, तथा सति तग्रहणस्यैव कर्तव्यत्वापत्तेरिति चेत्, अत्रोच्यते— 'तस्य दोषः—' इत्यत्र लत्वग्रहणेन त्रिपाद्यामन्तरङ्गपरिभाषाया अप्रवृत्त्या नित्यत्वादनुनासिके तदनापत्तिरित्याशयात्। घत्वजश्त्वानुनासिकेष्वित्यस्य विषयसप्तम्यन्तत्वेन एतद्विषये भष्भावानापत्तिरित्यर्थः। जश्त्वग्रहणं तु अपवादत्वाज्जश्त्वात्पूर्वं भष्भावप्रवृत्तिसंभवेऽपि ततो नित्यत्वादनुनासिकप्रवृत्त्यापत्तिरित्यर्थसूचनार्थम्। न च तमप्यपवादत्वाद्बाधित्वा 'झयः' इति वत्वापत्तिः, तदननुसंधानात्। रत्नग्रन्थस्तु आदिपदोपादानात् भुद्बदित्यादौ परत्वान्नित्यत्वाद्वा झलां जशिति जश्त्वे तदनापत्तिरिति यथाश्रुत एव सुयोजः। यद्वा 'अणुरपि विशेषः—' इति न्यायेन भुदित्यादौ स्वसमकालप्राप्तिकबाधेन चारितार्थ्येन एतद्बाधे मानाभावः। तथा च परत्वाज्जश्त्वम्। विप्रतिषेधशास्त्रप्रवृत्त्यनुसंधानाच्च न दोषः। अनुनासिकस्य जश्त्वापवादत्वं तु फले विशेषाभावात्परित्यक्तम्। वत्वाननुसंधानं पूर्ववत्। यद्वा एतस्य विधित्वे त्रिपाद्यामसिद्धत्वान्नुम्सुलोपयोः संयोगान्तलोपवत्वाभ्यां परत्वादितो विरोधाद्युगपत्तयोर्घत्वजश्त्वयोः सकृद्गतिन्यायेन लोपवत्वयोरप्रवृत्तौ भषं नित्यत्वाद्बाधित्वानुनासिकापत्तिः। पुनःप्रसङ्गविज्ञाने तु पुनर्लोपप्रवृत्तिवद्वत्वस्याप्यापत्तिः; तदुक्तम्— वस्तुत इत्यादिना॥ परत्वादिति। वत्वं तु तकारे चरितार्थमित्याशयः॥ अप्रवृत्तिरिति। विप्रतिषेधशास्त्रदृष्ट्या त्रिपाद्या असिद्धत्वादिति भावः। एवमपि विनिगमकाभावादनुनासिकापत्तिरिति चिन्त्यमेतत्। वस्तुतस्तु पूर्वोक्तरीत्या अपवादत्वात् 'झयः' इति वत्वे तत्काल एवाविरोधात् भष्भावे अनुनासिकापत्तिर्दोषः। वत्वात्परत्वात् भष्भावस्तु न, त्रिपाद्यां तदप्रवृत्तेरविरोधात्प्रतिपदोक्तत्वाच्च वत्वस्यैव न्याय्यत्वात्। किंचात्रैव संयोगान्तलोपे नलोपापत्तिरिति दिक्। अधिकारत्वे ज्ञापकमाह— श्चुत्वमिति॥ इत्यादीति।

आदिना 'निष्ठादेशः षत्व—' इति वार्त्तिके षत्वग्रहणं बोध्यम् । अत एव 'मो नो धातोः' इति नत्वे नलोपाभावः । नत्वं तु संबुद्धौ चरितार्थम् ॥ क्वचित्सपादेति । 'उदात्तस्वरितयोः—' इत्यत्र; तत्र हि फलाभावात् पूर्वग्रहणेन 'नलोपः सुप्—' इत्यादेरग्रहणमिति भावः । 'परश्च' इत्यादिवत्पदैकवाक्यताभ्रमं निवारयति— वाक्यभेदेनेति ॥ अत एवेति । वाक्यभेदेनान्वयादेवेत्यर्थः । यद्यत्र पदैकवाक्यता स्यात्, 'न मु ने' इत्यत्रापि तुल्यन्यायात्तथैव स्यादिति असिद्धत्वविशिष्टमुत्वस्यैव निषेधः स्यात् न त्वसिद्धत्वस्य; तथा च अमुनेत्यस्यासिद्धिः; तदाह— तन्निषेध इति । असिद्धत्वनिषेध इत्यर्थः । न चैवम् 'अदसोऽसेः—' इत्यनन्तरम् 'न ने' इत्येवास्त्विति वाच्यम्, एतद्बलादेव वाक्यभेदकल्पनमित्याशयात । केचित्तु शास्त्रासिद्धत्वस्वीकारादेवेत्यर्थः । कार्यासिद्धत्वे तु अद अ आ इत्यवस्थायां परत्वान्नित्यत्वात्पूर्वोपस्थितदकारनिमित्तकत्वेनान्तरङ्गत्वात्प्रतिपदोक्तत्वाच्च मुत्वे तस्यासिद्धत्वेऽपि अकाराभावेन पररूपाप्रवृत्तौ इनादेशे गुणे मुत्वासिद्धत्वनिषेधेऽपि स्थानिवत्त्वाभावात्पूर्वदेशनिमित्तकत्वेन अन्तरङ्गत्वेनासिद्धत्वाद्वा नाभावाप्रवृत्तौ तद्वैयर्थ्यमित्याहुः ॥ संग्राहकमेवेति । सकलविशेषबोधकमिति भावः ॥ असिद्धत्वाभावेऽपीति । प्रकरणाच्छ्रुतेर्बलवत्त्वादिति भावः ॥ आहार्यारोप इति । यद्यपि अतिदेशशास्त्राणां कार्यबोधकत्वेनाहार्यबुद्धिजनकत्वमसंभवि, तथापि रूपकादिवद्धतिशून्यसादृश्यपर्यवसायिनामाहार्यबुद्धिजननद्वारैव कार्यसंपादकत्वमिति भावः॥ परत्वादिति । उत्कृष्टत्वादित्यर्थः, प्रतिपदोक्तत्वादिति यावत् ॥ निरधिष्ठानेति । ननु शास्त्रेण विधेयत्वेनावगतस्य प्रसक्तस्यैवासिद्धत्वबोधनसंभवः । किं च कार्यप्रवृत्तावपि अनिष्पन्नत्वारोपेण स्थानिबुद्ध्या कार्यप्रवृत्तिसंभवः शास्त्रासिद्धत्वे अग्नी इतीत्यादौ प्रगृह्यत्ववदिति चेत्, न; नित्यशब्दवादे प्रयोगस्थस्यैव विधेयत्वेन कार्यप्रवृत्तेरावश्यकत्वात् । कार्यशब्दवादेऽपि अनुत्पन्ने अभावारोपाभावेन तदुत्पत्तेरावश्यकत्वम् । एवं चोत्पन्नकार्यस्यैव अभावारोपावश्यकतया देवदत्तहन्तुर्हतत्वबुद्धावपि देवदत्तोज्जीवनबुद्ध्यभाववत् स्थानिनिवर्तकस्याभावबुद्धावपि न स्थानिनः सत्त्वबुद्धिः । शास्त्रासिद्धत्वे तु शास्त्र एवाभावारोपेण तन्निवृत्ति-

बुद्धेरेवाभाव इति वैषम्यम्; तदेतदाह— शास्त्रासिद्धत्वे त्विति ॥ अन्तरङ्गत्वादिति । पूर्वोपस्थिताप्रतिबद्धनिमित्तकत्वादित्यर्थः ॥ तत्रेति । राजभ्यामित्यादौ ॥ अभावारोप इति । 'पूर्वत्रासिद्धम्' इत्यनेन तद्विषयकतयोपप्लुतेन अनिष्पन्ने तत्त्वारोपासंभवेन सिद्धत्वांशं विहायाभावमात्रस्यैवारोपो बोध्यत इति भावः । ननु 'आमन्त्रितम्—' इत्यतोऽविद्यमानवदित्यनुवृत्त्यैव सिद्धावसिद्धग्रहणं व्यर्थम्; एवं पूर्वत्रेत्यपीति चेत्, न; विभाषितमित्यस्यापि तत्संबद्धस्यानुवृत्त्यापत्तेः ॥ काकलकेति । ग्रीवायामुन्नतप्रदेशविशेषः । अनुदरा कन्येतिवदल्पत्वं नञर्थ इत्याह— अल्पघोषेति ॥ संस्काररूपेणेति । सूक्ष्मरूपेणेत्यर्थः ॥ तद्बोधनेच्छयेति । णिजन्ताल्ल्युट् । इदं च युक्तमित्यनेनान्वेति । अन्तःकरणं कर्तृ । इच्छारूपपरिणामविशेषविशिष्टं मनः कर्म ॥ उदीर्ण इति । ईर गतावित्यस्य क्ते रूपम् । इडभाव आर्षः । एवं पदार्थमुक्त्वा वाक्यार्थमाह— एवं चेति । पदार्थादूर्ध्वमिति शेषः ॥ विवरविकासादीति । मूलोक्तः क्रमो विवक्षितः, न पूर्वोक्तः । ननु उदात्तादिजनकयत्नस्य बाह्यत्वेनोदात्तानुदात्तयोरसावर्ण्यमाशङ्क्य अभेदका उदात्तादय इति तुल्यास्यसूत्रस्थभाष्यविरोध इत्यत आह— उदात्तादीति ॥ अविवक्षेति । शास्त्रीयकार्य इति शेषः । तेनान्तरतम्यपरीक्षायां भेदकत्वेऽपि न दोषः, तस्या लौकिकत्वात् । विकासे वायोः कर्तृत्वाद्वर्णानां तदसंभव इत्यत आह— विवक्षेति । अयोगवाहसंग्रहभ्रमवारणायाह— शषसा इति ॥ मूले, वर्गेष्विति । कवर्गेष्वित्यर्थः । अत एव 'चत्वारश्च यमाः' इति शिक्षोक्तिः संगच्छते ॥ अत एवेति । वर्गपञ्चमयुक्ताः प्रथमादयो यमा इति प्राचीनविवरणरीत्या त्वेतदसंगतिरिति भावः । पूर्वसदृश इत्युक्त्या लब्धे परसादृश्याभावे गमकमाह— चत्वारश्चेति ॥ अन्यथेति । अल्पप्राणत्वमात्राङ्गीकार इत्यर्थः ॥ दधाविति । घोषाद्यविशेषात् । नस्तु न, सानुनासिकत्वात् ॥ आदन्त इति । अत एव 'अन्तःस्थाभिश्च संयुतम्' इति शिक्षासंगतिः ॥ मध्य इति । लोकपाठापेक्षया इदम् ॥ एतदर्थमेवेति । ननु ऋकारांशे कुतः शङ्का न कृतेति चेत्, न;

'उरण्रपरः' इत्यादिषु ऋकारेण दीर्घाणां ग्रहणानापत्तेः अणुदित्सूत्रे आक्षर-समाम्नायिकानामेव ग्रहणात् ॥ असत्त्वशङ्कयेति । ननु दीर्घप्लुतायोगवाह-दुःस्पृष्टादीनामप्यनुपदेशेनासत्त्वशङ्का स्यात्; शिष्टोपदेशादिति चेत्, ऌकारेऽपि तथा वक्तुं शक्यत्वादिति चेत्, न; ऌकारस्य व्यञ्जनसदृशोच्चारणेन व्यञ्जनभेदज्ञापकोच्चारणभेदाभावेन व्यञ्जनातिरिक्तस्य तस्यासत्त्वशङ्कासंभवात् । दीर्घादिषु तूच्चारणस्यैव भेदेन ततोऽस्य वैधर्म्यम् ॥ एकारशकारादीनामिति । ननु आदिपदग्राह्याभावः; ओकारस्य ओष्ठ्यत्वमित्युपपादनानुपयोगश्चेति चेत्, न; 'नाज्झलौ' इति निर्देशेन अगंशे परस्परं सावर्ण्याभावेऽपि अजंशे वाक्य-भेदेन परस्परं सावर्ण्याभावबोधने अचः, इकारैकारयोश्चादिपदग्राह्यत्वेन पूर्वोक्त-सकलदोषवारणात् । यद्वा आदिपदेनोपध्मानीयानुस्वारयोर्ग्रहणम्; तेन उब्जे-रुपध्मानीयोपधत्वपक्षे यंयम्यत इत्यादौ च दीर्घो न; अन्यथा अयोगवाहाना-माश्रयस्थानप्रयत्नकत्वेन तदापत्तिर्दुर्वारा । न चासावर्ण्येऽपि अक्षु पाठाद्यण्गुणा-पत्तिस्तदवस्थेति वाच्यम्, पाठानित्यत्वेनादोषात् । इकारैकारादीनां तु ऐ औजिति सूत्रारम्भसामर्थ्येन विजातीयानां सावर्ण्याभावबोधनेन न सावर्ण्यम् । ओकारस्योष्ठ्यत्वमिति तु एकशिक्षावाक्यस्थत्वात्प्रसङ्गोच्चारितमिति दिक् । ननु 'हशि च' इत्येव सिद्धे 'अतो रोः' इत्यारम्भादेवाज्झलोः सावर्ण्याभावे सिद्धे किमनेनेत्यत आह— हशि चेति ॥ आपदेन द्वन्द्वे त्विति । 'देवदत्तयज्ञदत्तौ न मित्रे' इत्युक्ते परस्परनिरूपितमित्रत्वाभाववन्ताविति प्रतीतिवदिति भावः ॥ अत एवेति । आकारप्रश्लेषादेवेत्यर्थः ॥ साधित इति । उपपद्यत इति शेषः; अन्यथा फलभेदे प्रत्याख्यानासंभवादिति भावः ॥ मत इति । 'अज्झलोः प्रतिषेधे शकारप्रतिषेधः' अच्चैव हि शकार इकारग्रहणेन ग्रहणादिति 'नाज्झलौ' इति सूत्रस्थवार्त्तिककृन्मते इत्यर्थः । प्रथमान्तस्य विधेयसमर्पकत्वेन पश्चान्निर्देश उचित इत्यत आह— अणामिति ॥ युक्तमिति । अर्थविशेषबोधकस्यैव 'सनाशंस—' इत्यादिना विधानेन दीर्घादेश्च तत्सामर्थ्यादेवाविधेयत्वसिद्धौ अप्रत्ययग्रहणं व्यर्थं सत्, स्थालीपुलाकन्यायेन 'भाव्यमानेन' इति

प्राचीनसिद्धपरिभाषायाः प्रामाणिकत्वं बोधयतीत्यर्थः । प्रतीयत इति योगाश्रयणे तु ज्ञापयतीति भाष्यासंगतिः, वृत्त्यनुपस्थाप्येऽनुमीयमान एव ज्ञाप्यत्वव्यवहारादिति भावः ॥ ध्वनितं चेदमिति । अप्रत्ययपदस्य योगेन विधीयमानपरत्वं न सूत्रकृत्संमतमित्यादि पूर्वोक्तमित्यर्थः ॥ परास्तमिति । गुणाभेदकत्वप्राप्तस्यापि अप्रत्यय इत्यनेन निषेधे गुणाभेदकत्वज्ञापने फलाभावादिति भावः । परे तु गुणाभेदकत्वप्राप्तस्याप्रत्यय इत्यनेन निषेधे मानाभावः । किं च 'बहुवचने झल्येत्' इत्यादिना उदात्तानुदात्तान्यतरस्य विधानेऽन्यतरस्यानापत्तिः । एकश्रुत्या पाठेन निर्वाहे तु 'अभेदका गुणाः' इत्यस्यानुपयोगः । वृद्धिरादैच्सूत्रस्थम् 'अभेदका गुणा इत्येव न्याय्यम्, इति भाष्यं तु उत्सर्गतस्त्रैस्वर्येण पाठ इत्यभिप्रायेण । क्वचित्तु एकश्रुत्या पाठः; यथा— दाण्डिनायन—' इति सूत्रे ऐक्ष्वाकेति । किं च वधादेशे स्थान्यनुगुणेऽदन्तत्वप्रयुक्ते उदात्ते उच्चारणीये आद्युदात्तोच्चारणस्य विवक्षासंभवेऽपि चतुःशब्दस्याद्युदात्ततया तिसृचतस्रोस्तदुच्चारणस्यापि स्थान्यनुरूपतया तद्विवक्षायां मानाभावः । न च द्वन्द्वप्रयुक्ते अन्तोदात्ते उच्चारणीये तदुच्चारणं विवक्षार्थम् । अत एव 'चतसर्याद्युदात्तनिपातनम्' इत्युक्तं भाष्ये । निपातनं चान्यादृशप्रयोगकरणमिति वाच्यम्, अनङ्यपि 'क्रिषः' इति अन्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणस्य विवक्षासंभवेन ज्ञापितेऽपि उदात्तग्रहणवैयर्थ्यप्रसङ्गात् । किं च सहस्व सोऽपि 'क्रिषः' इति अन्तोदात्त एव न्याय्य इति तथोच्चारणं नाधिको यत्न इति तदविवक्षाप्रसङ्गः । किं च अनङादेशे आद्युदात्तनिपातनेनावङ्न्यासस्थापनपरषाष्ठभाष्यविरोधः, सुगवेत्यादौ गोशब्दस्यान्तानुदात्ततयाऽवङेऽपि तथोच्चारणस्य तदनुरूपतयाऽनङादिवदविवक्षाप्रसङ्गात् । तस्मात् 'अभेदका गुणाः' इति निष्फलमेव । उदात्तग्रहणं तु स्पष्टार्थमेव । अत एव 'अष्टन आ विभक्तौ' इति सूत्रे भाष्ये अष्टाभिरित्यादौ आन्तरतम्यादनुनासिकमाशङ्क्य 'अणसवर्णान् गृह्णातीत्युच्यते । न चाकारः अण्' इत्येवोक्तम्, न तु गुणाभेदकत्वेन तदाशङ्क्य विधीयमानत्वेन समाहितम् । त्वदुक्तरीत्या तु 'अणुदित्—' इत्यस्यानण्त्वेन अप्रवृत्तावपि गुणाभेदकत्वेन तत्प्राप्तेर्दुर्वारतया साधारण्येन भाव्यमानत्वादित्येव

परिहारो वाच्यः । एतेन गुणभेदकत्वपक्षप्राप्तस्य चाणनण्साधारण्येन निषेध इत्यपास्तम्, धर्मिकग्राहकमानबलेन 'भाव्यमानः—' इति निषेधस्य अण्मात्रविषयत्वाच्च । अत एव 'अण् सवर्णान्—' इति प्रतीकमुपादाय अनण्त्वादेव 'भाव्यमानोऽण्' इति परिहारो नोक्त इति कैयटोपाध्यायैरुक्तम् । किं च 'न ब्रूमोऽण् सवर्णान् गृह्णातीति । कथं तर्हि? तपरस्तत्कालस्य' इति तदुत्तरभाष्यासंगतिः, 'अप्रत्ययः' इत्यस्य त्वन्मते सर्वनिषेधकत्वात् । किं च अनडुदात्तः, यासुडुदात्तः ओ चोदात्त इत्यादौ उदात्तग्रहणानर्थक्यम् । आगमानामनुदात्तत्वस्य समानोदरे च उदात्तातिरिक्तस्य स्वरस्य प्राप्त्या तस्मिन्नेवोच्चारयितव्य उदात्तोच्चारणस्य विवक्षासंभवात् । किं च 'पद्दन्—' इत्यादौ पृथक् पृथक् पदसत्त्वेनान्तोदात्तोच्चारणस्य नान्तरीयकतया न तद्विवक्षासंभवः । तस्मादाचार्यानुक्तस्वरकेषु चतस्रादिषु गत्यन्तराभावेनाद्युदात्तनिपातनेऽपि अनडादिषु प्रतिज्ञादिसमधिगम्योदात्तोच्चारणापेक्षया उदात्तग्रहणमेव न्याय्यम्, 'नासूया—' इति न्यायात् । वृद्धिरादैच्सूत्रस्थम् 'अभेदका गुणाः' इति भाष्यं तु एकदेश्युक्तिः । वस्तुतस्तु गुणशब्देनात्रोदात्तानुदात्तस्वरिता एव । अत एव वृद्धिरादैच्सूत्रे भाष्ये 'आकारस्य तपरकरणं सवर्णार्थं भेदकत्वात्स्वरस्य' इत्युक्तम् । 'अस्ति प्रयोजनम्' इत्याद्यग्रिमभाष्यं त्वेकदेश्युक्तिः, उदात्तग्रहणज्ञापकत्वस्य सजातीयापेक्षत्वेन स्वरविषयकत्वस्यैवौचित्यात् । अत एव 'अष्टनः—' इति सूत्रे गुणाभेदकत्वेन नानुनासिक आपादितः । अत एव चाणुदित्सूत्रे अण्ग्रहणं चरितार्थम् । अत एव 'विड्वनोः—' 'त्यदादीनामः' इत्यादौ नानुनासिकस्य विधेयत्वम् । तथा चायं निष्कर्षः— 'अभेदका गुणाः' इत्यत्र स्वराणामेव गुणशब्देन ग्रहणाड्डटवदित्यादौ नानुनासिकादिप्रसङ्गः । 'अप्रत्ययः' इति चाणप्रयुक्तसवर्णग्रहणस्यैव निषेधकः । वस्तुतस्तु 'गुणा अभेदकाः' इत्यस्य फलाभाव इति सुधियो विभावयन्त्वित्याहुः ॥

इत्त्वप्रवृत्तेरिति । ननु कुक्तुगादीनामपि उदित्त्वेन स्वसवर्णग्रहणं स्यादिति चेत्, न; तुकि विधेये थुग्विधानसामर्थ्येन सागमलिङ्गकोदित्त्वप्रयुक्तसवर्णग्राहकत्वाभावज्ञापनात् । केचित्तु— चोरित्यादौ उदित्करणसामर्थ्यात्समुदायसवर्णाप्रसिद्धावपि

तदवयवत्वादिसवर्णानादाय तत्प्रवृत्तावपि तुगादौ तत्प्रवृत्तौ मानाभाव इत्याहुः । ननु 'इदम इश्' इत्यादाविव 'इङश्च' इत्यादावपि एतत्प्रवृत्त्यापत्तिः । विधेय इवोद्देश्येऽपि अनुपदोक्तरीत्या इत्संज्ञाप्रवृत्त्या उभयोः साम्यमिति चेत्, न; 'एत्येधत्यूठ्सु' इति सूत्रे उठिति वक्तव्ये दीर्घनिर्देशेन प्रत्याहारासंपादकानुबन्धघटितानुवादप्रदेशे एतदप्रवृत्तिज्ञापनेनादोषात् ॥ पुरुषादीति । इदं चिन्त्यम्, पुरुषभेदे वास्तविकभेदस्यैव सत्त्वेनारोपानुपयोगात् । तुल्यास्यसूत्रे कार्यगतभेदस्य स्थानिष्वारोपस्य पूर्वमुक्तत्वेऽपि न तावता ह्रस्वाकारयोस्तुल्यस्थानत्वनिर्वाह इति पुनरुक्तिः ॥ ऌकारग्रहणेनेति । ननु वार्त्तिकमतेऽण्ग्रहणं नास्त्येव । सूत्रकृन्मते सावर्ण्याभावात् 'तपरस्तत्कालस्य' इत्यस्य प्रवृत्त्यसंभव इति चेत्, न; वार्त्तिककृदुक्तस्यापि सूत्रकृत्संमतत्वस्य 'न कोपधायाः' इति सूत्रे शेखरे वक्ष्यमाणत्वेनादोषात् । प्रकृते प्रत्याहारघटकद्वितीयवर्णादौ चाप्रवृत्तेरिति योजना । आद्य हेतुमाह— भेदेनेति । नन्वेवमणुदित्सूत्रेऽण्ग्रहणं व्यर्थमत आह— चारितार्थ्येनेति । ननु टिघुभादिघटकवदनर्थकत्वेन कथमत्र चारितार्थ्यमत आह— तत्रत्येति । अणादिशब्दस्येत्यर्थः । ननु उच्चरितस्यैव प्रत्यायकत्वेनासंगतमेतदत आह— उच्चारिताभेदेनेति । भग्नदन्तादिशब्दसंग्रहाय उच्चारितत्वेनानुसंधीयमानत्वमेव बोधप्रयोजकम्, न तु वास्तवं तदिति भावः ॥ अनेकतकारादीनामिति । वस्तुतस्तु व्यक्तिपक्षेऽपि झलादिप्रत्याहारेषु न दोषः । 'आदिरन्त्येन—' इत्यनेनैवाद्यन्ताक्षिप्तसमुदायस्य संज्ञाया अनुपयोगात्तदवयवेषु आक्षरसमाम्नायिकेष्वपि फलाभावादप्रवृत्त्या तत्सदृशेषु जायमाना विनिगमनाविरहात्सर्वेषां भविष्यतीत्यनेकतकारादीनां झल्त्वादिसिद्धिः ॥ समानजातित्वस्येति । समानो वर्णः धर्मो येषां तत्त्वमित्यर्थ इति भावः । ननु होतृकारः गमृनित्याद्यसिद्धिः, समानजातित्वातिदेशेऽपि सावर्ण्यानतिदेशादिति चेत्, न; समानजातित्वादेशे समानस्थानत्वप्रयुक्तसवर्णत्वादेरार्थसमाजग्रस्तत्वात् । नन्वेवं कृष्णर्द्धिरित्यत्र कदाचिल्लपत्वापत्तिरिति चेत्, न; समानजातित्वातिदेशस्य अनित्यत्वेनादोषात् । सावर्ण्यपदस्य समानजातित्वे लक्षणामभिप्रेत्य तद्बीजभूतं भूयःसाहचर्यमाह— एतद्व्यतिरिक्तेति ।

'कार्यसंकरो यथा व्यक्तिपक्षे' इत्यन्त एको ग्रन्थः ॥ अभिमानिनेति ॥ अत्रत्यं तत्त्वं प्रागुक्तम् ॥ **तपरस्तत्कालस्य** ॥ सवर्णग्रहणबोधनेनेति । भामेत्यादिवल्लुप्तपूर्वकपदस्य सवर्णपदस्य निर्देश इति भावः ॥ सर्ववर्णेति पाठे तु वर्ण्यत इति वर्णः बोध्यः; अस्य वर्णः अवर्ण इत्युक्त्या शक्तिसंकोचकशास्त्राननुसंधानकालीनबोधविषयस्य ग्रहणमिति न दोषः । यद्वा वर्णग्रहणस्य ग्राहकशास्त्राननुसंधानकालीनतात्परजन्यबोधविषयसमकालिकग्राहकस्तात्पर इति ज्ञापकत्वेनादोषः । अवर्णस्येत्यत्र प्रागुक्तरीत्या मध्यमपदलोपी समासः । एवं च 'वृद्धिरादैच्' इत्यादावपि न दोषः । तात्परशब्दबोध्यो वर्ण इति तु चिन्त्यमेव, तद्बोध्यत्वस्यातात्परेऽपि संभवेन सर्वत्रैतत्प्रवृत्त्यापत्तेः ॥ विरोधस्येति । आकडाराधिकारस्थबहिर्भूतानां साक्षाद्विरोधवतामेव बाध्यबाधकभावाभाव इति भावः । वस्तुतस्तु तपरसूत्रस्य तात्पर्यविशेषनिर्णायकत्वरूपशक्तिसंकोचकत्वसंभवे षड्वर्णनिरूपितशक्त्यन्तरकल्पकत्वस्यायुक्तत्वेन अगृहीतशक्तिग्राहकत्वेन विध्यर्थत्वायोगान्नियमार्थत्वमेव । एवं च गुणानां भेदकत्वे आवृत्त्या विधायकत्वनियामकत्वोभयाङ्गीकरणेन दोषनिस्तारो नान्यथा । गुणानामभेदकत्वे तु नियमार्थमेव । व्यापकधर्मावच्छिन्ने शक्तस्य व्याप्यधर्मावच्छिन्ने शक्तयन्तरं नास्त्येव गौरवात् । तत्र शक्तिग्राहकाणां प्रागुक्तशक्तिसंकोचकत्वमेव अत एव गोशब्दस्य न गोत्वावच्छिन्ने शक्तयन्तरम् । एवं च गुणानामभेदकत्वे त्वित्यादि चिन्त्यमेवेति दिक् ॥ अभेदकत्वे त्विति । व्यक्तिपक्षे इति शेषः ॥ जातिपक्षे त्विति ॥ भेदकत्वे गुणानां चेति शेषः ॥ नन्वेवं सति तत्तद्गुणसमानाधिकरणजात्यवच्छिन्नस्य ग्रहणापत्त्या भिन्नगुणसंग्रहाय विध्यर्थत्वमेवोचितम् । यदि च जातिपक्षो भेदकत्वं चेति, तदा गुणानामभेदकत्वमित्याद्युत्तरग्रन्थेन पुनरुक्तिः । अथ गुणानामभेदकत्वं व्यक्तिपक्षश्चेत्युत्तरग्रन्थाशयस्तदा अनवकाशत्वाद्बाध इति पूर्वग्रन्थविरोधः । यदि चानवकाशत्वाद्बाध इत्यस्य नियमेन बाध इत्याशयः, नियमार्थमित्यस्य चानवकाशत्वेन बाधे फलतो नियमार्थमित्याशयः; तथापि इदं च विध्यर्थमित्याद्युपक्रम्य अनवकाशत्वाद्बाध इत्युक्तासंगतिः; जातिपक्षे

तु नियमार्थमेवेत्युपक्रम्य एवं गुणानामभेदकत्वमिति सिद्धान्तपक्षेऽपि नियमार्थमेवेत्युक्तासंगतिश्चेति चेत्, अत्राहुः— जातिपक्षे त्वित्यस्य गुणभेदकत्वसमुचितजातिपक्षाभिप्रायकत्वेऽपि एकश्रुत्या पाठ इति पक्षाभिप्रायकत्वेन विध्यर्थत्वासंभवान्नियमार्थत्वोक्तिरिति न पूर्वग्रन्थविरोध इति ॥ आद्गुण इत्यादाविति । 'उपसर्गादृति—' इति तपरकरणेन विभक्त्युत्पत्तिप्राक्कालीनतपरत्वस्यैव तपरसूत्रप्रवर्तकत्वज्ञापनेन विभक्तितकारेऽप्रवृत्तिः फलतीति भावः । एतेन प्रातिपदिकसंज्ञाप्रवृत्त्युपयोग्यर्थवत्त्वपरीक्षायामेव तपरसूत्रप्रवृत्तेः 'वोतो गुण—' इत्याद्यनुरोधेनावश्यकत्वाच्चिन्त्यमिदमित्यपास्तम् ॥ दकार एवेति । वस्तुतो दकारप्रश्लेषेऽपि तद्विषये पञ्चमीसमासानाश्रयणे न कोऽपि दोष इति बोध्यम् ॥ **वृद्धिरादैच्** ॥ पदत्रयमिति । अस्मिन्कल्पे संज्ञिभेदेन संज्ञाशब्दस्य आवृत्त्या योजना । द्वन्द्वे तु समुदायस्य एकस्यैव संज्ञित्वान्न सा ॥ असंदेहार्थतयेति । तयैवेत्यर्थः ॥ त्रिमात्रेति ॥ चतुर्मात्रेत्यपि बोध्यम् ॥ इति वाक्यार्थ इति । शक्तिग्रहस्तु वृद्धिपदमादैक्षु शक्तम्, तदभिन्नत्वादित्येतन्मूलानुमानादिति भावः ॥ तादात्म्यस्येति । भेदसहिष्णोरित्यर्थः । तेनाग्निरित्युक्ते न मुखे दाहापत्तिः ॥ अन्यत्रेति । मञ्जूषायाम् । वस्तुतस्तु इदं खल्वपि भूयः सामानाधिकरण्यम् एकविभक्तित्वं च । द्वयोश्चैतद्भवति । कयोः? विशेषणविशेष्ययोः संज्ञासंज्ञिनोर्वा' इति प्रकृतसूत्रस्थभाष्यात् समानविभक्तिकशब्दार्थपरनामार्थयोर्वाच्यवाचकभावेनैवान्वय इति व्युत्पत्तेर्वृद्धिपदवाच्या आदैच इत्येव वाक्यार्थः । आदैचो वृद्धिपदाभिन्ना इति वाक्यार्थ इति त्वशुद्धम्, अभेदस्य संसर्गताया दूषयिष्यमाणत्वात् ॥ न च इतरसंबन्धानवच्छिन्नविशेषणविशेष्यभाव एव तदर्थः, पदपदार्थयोस्तादात्म्यस्येत्याद्युत्तरग्रन्थासंगतेः । किं च भेदसहिष्णुना तेनैव पदार्थोपस्थित्याद्युपपत्तौ शक्त्यङ्गीकारो निर्बीजः स्यात् । न च सैव शक्तिः, शक्तेस्तदतिरिक्तत्वस्य मञ्जूषायां व्यवस्थापितत्वेन तद्विरोधापत्तेरिति दिक् ॥ संज्ञासूत्राणां नियामकत्वमिति प्राचोक्तं दूषयितुं युक्तिसिद्धम् 'सर्वे सर्वार्थवाचकाः' इत्यनुशासनमजानतोऽपेक्ष्य आहोस्विज्जानत इति विकल्प्य आद्यं दूषयति— सर्वशब्दाना-

मिति । द्वितीयं दूषयति— किं चेति ॥ सामान्यत इति । अयं भावः— शक्तिग्रहशाब्दबोधयोः समानप्रकारकत्वेनैव कार्यकारणभावस्यावश्यकतया एतदनुशासनाधीनशक्तिग्रहस्य विशेषधर्मप्रकारकशाब्दबोधानुपयोगित्वम्; अन्यथा द्रव्यं घटपदवाच्यमिति शक्तिग्रहाद्घटत्वप्रकारकशाब्दबोधापत्तिरिति । विस्तरस्त्वन्यत्र बोध्यः । ननु संकेतस्य संकेतयितुश्चानियमात्सर्वस्य सर्वत्र संकेतसंभवात्सर्वस्य सर्वत्र शक्तौ तस्याश्च 'सिद्धे शब्दार्थसंबन्धे' इति वार्त्तिकाद्यनुरोधेन नित्यत्वे च वृद्ध्यादिशब्दानां यदृच्छाशब्दत्वेन व्यवहारानुपपत्तिरत आह— तत्रैवेत्यादि । संज्ञासूत्राणां नियामकत्वोक्तिपरभाष्यविरोधमाशङ्क्याह— प्रकरणादिति । यद्यपि तात्पर्यज्ञानस्य नास्मन्मते शाब्दबोधजनकत्वम्, तथापि दावदहनादौ सहकारिणि विचित्रशक्तिदर्शनात्प्रकरणादिसहकारिणः स्वसमानविषयकशाब्दबोधजनकत्वात् नान्यार्थग्रहणमिति भावः । नन्वास्वाभिवृद्धावेव शास्त्रेण साधुत्वबोधनादश्वे अस्वशब्दवदादैक्ष्वसाधुत्वम्, त्र्यैवशब्दानां प्रवृत्तिरिति ऋऌक्सूत्रभाष्येण यदृच्छाशब्दानामभावादित्यत आह— आसां चेति । प्रदेशेष्वेव संज्ञाशास्त्राणां पदैकवाक्यतया कार्यकालपक्षे वाक्यार्थबोधः; सामानाधिकरण्यान्नामधेयत्वावगतिरिति कौस्तुभोक्तं भाष्यविरोधेन दूषयति— कार्यकालेति ॥ अत्रेति । अत्र वदन्ति— तद्भावितानामेव संज्ञा, 'वृद्धिनिमित्तस्य—' इति सूत्रे वृद्धेस्तद्धितस्येति न्यासेन 'इको गुणवृद्धी' इत्यत्रावृत्त्याद्यनाश्रयणेन च लाघवात् । वृद्धिसंज्ञासूत्रे वृद्धिपदस्थाने आदैच्पदं पाठ्यम्; तेन शालीयादिसिद्धिः । 'इक्वृद्धौ' इत्यत्र च 'इक्वृद्धेः' इति न्यास इति; तन्न, अन्योन्याश्रयपरिहाराय भाविसंज्ञाविज्ञाने गौरवात् । किं च वैयाकरणीभार्य इत्यत्र नव्योक्तरीत्या इष्टस्य पुंवद्भावनिषेधस्यानापत्तिरिति दिक् ॥ **भूवादयः** ॥ भ्वादिपदं तद्बोध्यपरं पठितानां शब्दस्वरूपपरत्वेन क्रियावाचित्वाभावात् । यद्यपि वानिष्ठसादृश्यप्रतियोगीत्येव वृत्त्या लभ्यम्; तच्चासंभवि, भ्वादीनामद्यापि क्रियावाचित्वेनानिर्णयात् । तथापि तदुपमानत्वयोग्यत्वं वादित्वम्; तेन च क्रियावाचित्वमाक्षिप्तमित्यदोषः । भ्वादय इत्येव

सुवचम्, भूप्रभृतयो भूसदृशा इत्यर्थसंभवात् ॥ वाशब्दस्येति । यद्यपि वादय इत्युक्तावपि अयं दोषस्तदवस्थः, असत्त्वार्थत्वेनापि सादृश्यग्रहणसंभवात्; तथापि व्याख्यानात्क्रियावाचित्वेनैव तद्ग्रहणमिति भावः । ननु 'कृत्तद्धित—' इति सूत्रे निपातानां सूत्रस्थचेन समुच्चयात् प्रातिपदिकत्वं सुलभम्, 'निपातस्यानर्थकस्य—' इति वार्त्तिके अनर्थकग्रहणस्य भाष्ये प्रत्याख्यानात् । किं च चादिषु पाठसामर्थ्यादप्यस्य धातुत्वाभावः सुवचः, निपातत्वस्य सुब्लुगर्थतयैवोपयोगात् ॥ न च दिविति प्रातिपदिकस्य धातुत्ववारणाय तत्, निरनुबन्धपरिभाषयैव तद्वारणसंभवादिति चेत्, न; भूरैमाद्रुकुप्रभृतीनां धातुत्ववारणाय तदित्येवेहि । नन्वसत्त्वरूपक्रियात्वस्य वार्थविकल्पेऽपि सत्त्वात्तदुक्तावपि उक्तदोषो दुर्वार इत्यत आह— तदुक्तौ त्विति ॥ संबन्धाभावेनेति । भूतभविष्यत्कालपरिच्छिन्नत्वं क्रियात्वम् । परिच्छेद्यपरिच्छेदकभावश्च संबन्धविशेषः द्रोणादिभिर्धान्यानामिव मासमपाक्षीत्पक्ष्यतीत्याद्यनुभवसिद्धः । मुहूर्तं सुखमित्यादावपि अस्तिक्रियाद्वारैव कालपरिच्छेद्यत्वम् । तथा च हरिणोक्तम्— 'क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका—' इति । अत्र वदन्ति— ज्ञानेच्छानाशानां गुणाभावरूपाणां कालपरिच्छेद्यत्वे मानाभावेन तदर्थकानां धातुत्वानापत्तिः । तत्त्वे वा वार्थेन किमपराद्धम् । एवं कालिकातिरिक्तस्य संबन्धविशेषस्य मासं पक्ष्यतीत्यादिप्रतीतिविषयत्वमप्यप्रामाणिकम्, मासं कल्याणी मुहूर्तं सुखमित्यादिप्रतीतिसाधारणकालिकादिनैवोक्तप्रतीत्युपपत्तेः । द्रोणपरिच्छिन्नो व्रीहिरित्यत्र तु संयोगस्य तृणादावपि संभवात् समवायस्य चासंभवादगत्या संबन्धान्तरस्यैव तद्विषयत्वम् । तस्मात् साध्यत्वेन प्रतीयमानत्वं तत् । साध्यत्वं च यद्यपि न तावक्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकवैजात्यम्, क्रियाया अन्तःप्रवेशात् । नापि कारकाकाङ्क्षोत्थापकत्वम्, कारकत्वस्य क्रियानिरूपितत्वेनोक्तदोषात् । नाप्युत्पाद्यमानत्वम्, तस्य द्रव्यादिसाधारण्यात् । नापि तत्त्वेन प्रतीयमानत्वम्, उत्पाद्यमानशब्देन प्रतीयमानद्रव्येऽतिव्याप्तेः पच्यादिभ्यस्तथा प्रतीतौ मानाभावाच्च । नापि वैजात्यम्, तत्परिचायकाभावात् ।

तथापि आभीक्ष्ण्यान्वयितावच्छेदकं वैजात्यं तत् । यद्वा कृत्वसुजर्थान्वययोग्यं तत् । तत्परिचायकं च निवृत्तभेदत्वम् । तत्त्वं च स्वगतधर्मवत्त्वेन भासमानस्वावयवगतधर्मवत्त्वेन भासमानसमुदायत्वम् । तथा च भाष्यम्— 'क्रिया नामेयमत्यन्तापरदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निर्दशयितुम्' इति । अव्ययपदवत्वासमानाधिकरणसर्वनामपरामर्शायोग्यत्वं तादित्यपि केचिदिति ॥ आणवयति वट्टयतीति । आनयति वर्धयतीत्यर्थकौ बालभाषायां प्रसिद्धावेतौ । इदं चिन्त्यम्— शास्त्रविषयतामात्रस्य साधुत्वप्रयोजकत्वेऽर्थवत्सूत्रस्य विषयतया एतयोः साधुत्वस्य दुरुद्धरत्वात् । किं बहुना— सकलप्राकृतभाषाशब्दानां 'इको यणचि' इत्यादिशास्त्रविषयतया साधुत्वापत्तिः । तस्माच्छास्त्रविषयत्वे वेदलोकप्रयुक्तत्वमेव साधुत्वे तन्त्रम् । अत एव तत्र भगवान् भाष्यकार आह— 'यथालक्षणमप्रयुक्ते' इति । भ्वादय इत्यस्य व्यावर्त्यं तु यद्यपि न पचतीति, क्रियाबोधकत्वेऽपि तदशक्तत्वात् । नापि भावे तिङन्तम्, क्रियासमभिहारे लोडन्तं वा, 'सनाद्यन्ताः—' इति नियमेन वारणसंभवात् । तथापि भावार्थतिङ्व्यावर्त्यः । तस्य धातुत्वे यद्यपि नात्त्वमापादयितुं युक्तम्, शित्परत्वायोग्यत्वात्; तथापि ततः कर्तरि भावे वा तृच्घञादयः स्युः, घञां स्वार्थिकत्वेनोक्तार्थत्वेऽपि प्रवृत्तिसंभवात् । किं च 'सहयुक्ते—' इति सूत्रस्थभाष्यरीत्या सहशब्दस्य क्रियावाचित्वेन स एवास्य व्यावर्त्योऽस्त्विति दिक् ॥ **प्राग्रीश्वरात्** ॥ प्रागीश्वरादिति नोक्तम्, 'स्वामीश्वर—' इत्यादीनामपि अवधित्वभ्रमापत्तेः । रीश्वरादित्यस्य प्रागित्यनेन संबन्धे इश्वरेऽधेर्निपातत्वानापत्तिः । अतोऽभिव्याप्येति ल्यब्लोपे पञ्चमीत्याह— इत्यभिव्याप्येति ॥ यथाकार्यमिति । इदम् 'अव्ययं विभक्ति—' इति सूत्रे मूले एव स्फुटीभविष्यति । नन्वेवं शरैरुस्रैरित्यादाविवादेर्वाचकत्वमादाय षष्ठ्यपि स्यादत आह— यथाप्रयोगमिति ॥ विप्रादिवटकेति । विपूर्वात्प्रातेः 'आतश्चोपसर्गे—' इति कः । रूढत्वेऽपि रथंतरादिवत्कल्पितार्थस्यापि प्रक्रियोपयोगित्वमिति भावः । वस्तुतो लाक्षणिकत्वादिनापि निपातत्वं सुवारम् ॥ स्वरादिपठितानामिति । यद्यपि

'स्वरादिनिपातम्—' इत्यत्र स्वरादेः पृथग्ग्रहणात् तेषां न निपातत्वमिति वक्तुं शक्यम्; तथापि दोषामन्यमहरित्यादौ वृत्तिविषये सत्त्ववृत्तित्वेऽव्ययत्वार्थं तदावश्यकम्, अव्ययत्वे हि ह्रस्वाद्यभाव इति भावः ॥ योगग्रहणमिति । अयं भावः— श्रुनेतिवत्क्रिययेत्येव सिद्धे पृथक् तदुपादानं शास्त्रार्थकमिति विज्ञायते । तथा चायमर्थः— कस्मिंश्चित्कार्ये कर्तव्ये ते तत्संज्ञाः स्युः । कार्यं च कस्येत्याकाङ्क्षायां यदर्थक्रियया योगः, तस्येति लभ्यते । तेन तत्क्रियायोग इति सिद्धमिति ॥ विसेचक इति । अत्र वदन्ति— 'ते प्राग्धातोः' इत्यस्य प्रयोगनियमार्थत्वे कथमस्य साधुत्वम्? संज्ञानियमार्थत्वे तु तत एव नोपसर्गत्वमिति योगग्रहणं व्यर्थम् । न च कस्माच्चिद्धातोः पूर्वत्वमेव तत्र विवक्षितम्, तथा सति अनुभवति पाचक इत्यर्थे भवत्यनुपाचक इत्यापत्तेः । न च परिनिष्ठिते गतादेर्लोपेऽपि प्रक्रियायां व्यतिसे इत्यादिवत् धातोः प्राक् प्रयोगोऽक्षत एव । एवमेव विपपाच व्यपाक्षीदित्यादीनामुपपत्तिरिति वाच्यम्, एवमपि तदर्थे वृत्तिमाश्रित्य वचनस्य प्रख्यातॄणां प्राचां मतेऽनिर्वाहादिति । अत्रोच्यते— धातोः सति प्रयोगे ततः पूर्वमेव प्रयोक्तव्या इति तदर्थाश्रयणेनादोषात् । 'पूर्वं धातुः साधनेन युज्यते' इति सैद्धान्तिककल्पे 'प्राक्सितात्—' इति 'स्थादिषु—' इति च ज्ञापकाभ्याम् अडभ्यासव्यवधानं सह्यत इति न विपपाचेत्यादिप्रयोगानुपपत्तिः ॥ अभेदविवक्षयेति । भेदविवक्षैवेति स्वसिद्धान्ते तु 'प्रकृतिवदनुकरणम्' इत्यतिदेशात्सुपो लुक् ॥ रुत्वमसिद्धमिति । 'निरः कुषः' 'सुदुरोरधिकरणे' इत्यनयोः ॥ सान्तस्यापीति । वक्ष्यमाणं गमकं प्रतिपदोक्तपरिभाषाया अप्रवृत्तावपि गमकम् ॥ सार्थक इति । ननु दुःपूर्वकस्य दुःस्थु इति प्रयोगव्यावृत्तिस्तत्फलमिति चेत्, न; 'अपदुःसुषु स्थः' इति सविसर्गकन्यासेन दुःपूर्वकात्कुप्रत्ययाभावसंपादनसंभवेन तदर्थं तत्पाठस्यानावश्यकत्वात् । वयं तु 'इण् निष्ठायाम्' इत्यत्र भाष्यविरोधेड्ग्रहणवैयर्थ्यापत्तिभ्याम् 'असति बाधके—' इति न्यायेन यत्र रुत्वमसिद्धं तत्रापि सान्तग्रहणमिति युक्तं प्रतीमः । तथा

हि— 'इण्निष्ठायाम्' इत्यत्र भाष्यम्— इड्ग्रहणं किमर्थम्? नित्यार्थम् । ननु 'निरः कुषः' इति विकल्पे सिद्धे योगारम्भ एव नित्यार्थो भविष्यति । बाढम् । यस्य विभाषेति निषेधादिट्यप्राप्ते पुनरारम्भो विकल्पार्थः स्यात् । इड्ग्रहणात्तु इडेवेति । 'यस्य विभाषा' इत्यत्र 'यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः' इति भाष्ये उक्तत्वेन निरुपाधेः प्रतिषेधेऽपि निरुपाधेरिड्विकल्पसिद्ध्या पुनरारम्भस्यैव नित्यार्थत्वसिद्ध्या तद्भाष्यविरोधेड्ग्रहणवैयर्थ्ये स्फुटे ॥ **न वेति विभाषा** ॥ विधिमुखेनेति । भावतात्पर्यकत्वे ॥ किंत्विति । अयं भावः— वाशब्दस्य हि पक्षे भवनं तदभावश्च शक्यौ । अत एव स्थाणुर्वा पुरुषो वा इति शब्दोल्लेख्यस्य चतुष्कोटिकत्वमिति वृद्धाः । तत्र च 'हलादिः शेषः' इति सूत्रे आटतुरित्यादौ अजादौ तच्छास्त्राप्रवृत्तिसंपादकभाष्योक्तन्यायेन पक्षे भवतीत्युक्ते गम्यमानस्य पाक्षिकाभावस्य यत्र संभवस्तत्रैव पक्षे भवतीत्युपतिष्ठेत । एतेन तत्र भावस्य सिद्धत्वेऽपि पर्जन्यवल्लक्षणप्रवृत्त्या परत्वात् विकल्पः स्यादित्यपास्तम् ॥ निषेधमुखेनेति । इदमभ्युपेत्य । वस्तुतस्तु 'विधिनियमसंभवे विधिरेव ज्यायान्' इत्येतन्मूलभूतया भावतात्पर्यकत्वे लाघवमिति युक्त्या पक्षे भवतीत्येवार्थः स्यादिति बोध्यम् ॥ उभयथेति । तन्त्रेणानेकार्थत्वमाश्रित्येति भावः ॥ वैरूप्यादिति । विरुद्धानेकार्थस्यैकेन वाक्येन बोधयितुमशक्यत्वात्; न ह्येकवाक्येन घटोऽस्ति नेति च बोधयितुं शक्यम् । यद्वा क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेनेत्येवं प्रवृत्तेर्वैरूप्यात् संभवन्त्यामैकरूप्येण प्रवृत्तौ वैरूप्येण सा न न्याय्येति भावः । केचित्तु भावाभावोभयं वार्थः । तत्र 'वनो र च' इतिवत् उभयविधायकत्वे गौरवात् किंचिदनुवादेन किंचिद्विधायकत्वमेव । तत्र चाभावानुवादेन भावविधायकत्वे पित्स्वेव प्रवृत्तिः स्यात्; किंत्सु तु अनुवाद्यस्याभावस्याभावेन नैव प्रवृत्तिः स्यात् ढगभावे इनङ्वत् । एवं निषेधमुखेन प्रवृत्तावपि । उभयविधायकत्वे तु क्वचिदपि न प्रवर्तेत, उभयोः क्वाप्यपूर्वत्वासंभवात् । कुत्रचिद्भावानुवादेनाभावस्य कुत्रचिच्चाभावानुवादेन भावस्य विधाना-

भ्युपगमे तु वैरूप्यमिति व्याचक्षते ॥ वाक्यभेदापत्तेरिति । विधेयभेदात् ण्वुल्तृजादावपि स इष्ट एव । यद्यपि सूत्रारम्भेऽपि वैरूप्यवाक्यभेदौ तदवस्थौ; तथापि सूत्रानारम्भे संभवत्येकवाक्यत्वे एकरूपत्वे च तद्वैपरीत्यस्यानौचित्येनोभयथा प्रवृत्तिर्न कल्प्येत । तदारम्भे तु ऐकरूप्याद्यसंभवेन शास्त्रबलेन च पूर्वोक्तन्यायबाधः । एवं चोभयथाप्रवृत्तितात्पर्यग्राहकं सूत्रमिति फलितम् । अत एव प्रत्याख्यानपक्षे लक्ष्यानुरोध एव उभयथा प्रवृत्तौ गमक इति वक्ष्यति ॥ ऐकरूप्येणेति । इदं वस्तुस्थितिकथनम्, न त्वत्र वैरूप्यवाक्यभेदयोरभावाभिप्रायेण । इदं विचार्यते— सूत्रारम्भेऽपि निषेधविकल्पयोः पुष्पवच्छब्दवदेका शक्तिः, आहोस्विद्भिन्ना? नाद्यः, 'श्रुतक्रमानुरोधात्पूर्वं कित्सु निषेधः, ततः पक्षे भवतीति विधिमुखेनैव विकल्पः' इति ग्रन्थासंगतेः शब्दस्य विरम्यव्यापारासंभवात् । किं चैवम् 'सिद्धं तु पूर्वस्योत्तरेण बाधित्वात्' इत्येतत्सूत्रस्थभाष्यासंगतिः । नान्त्यः, प्राप्तविभाषासु निषेधस्यैवापत्तेरिति । अत्रोच्यते— एकैव शक्तिः । श्रुतक्रमानुरोधादित्यादिग्रन्थस्तु मानसं बोधमभिप्रेत्य, न शाब्दबोधम् । एवमेव भाष्यमपि योज्यम् । केचित्तु पृथगेव शक्तिः । नेत्येव वक्तव्ये वाशब्दादिबलात्तन्त्रेणोभयं विवक्षितमित्याहुः । व्यक्तिपक्षे एतत्प्रत्याख्यातम् । तत्र हि प्रतिलक्ष्यं लक्षणभेदान्नैकस्योभयथा प्रवृत्तिरिति कैयटोक्तं दूषयति— जातिव्यक्तिपक्षयोरुभयोरपीति । प्रतिलक्ष्यं लक्षणस्योपप्लवं विनापि संग्राहकवाक्यार्थबोधमात्रेण लक्ष्यसंस्कारो हि जातिपक्षशब्दार्थः । संग्राहकवाक्यार्थबोधोत्तरम् उपप्लूयमानवाक्यार्थबोधः; ततश्च लक्ष्यसंस्कारो हि व्यक्तिपक्षशब्दार्थः । तत्र जातिपक्षे वाक्योपप्लवाभावे न मानम् । सामान्यवाक्यार्थबोधानुसारेणैवोपप्लूयमानवाक्यार्थकल्पनया लक्ष्यानुरोधेन सामान्यवाक्यस्योभयथाप्रवृत्तिकल्पनामन्तरेण न द्वेधोपप्लूयमानवाक्यकल्पनासंभव इति लक्ष्यानुरोधादरणस्यावश्यकत्वे तेनैव जातिपक्षेऽप्युभयथाप्रवृत्तिसंभवेन तत्रापि प्रत्याख्यानसंभवश्चेति कैयटोक्तमयुक्तमिति भावः । एतदुद्धारस्तु अस्मत्करिष्यमाणप्रदीपप्रभायां बोध्यः । परे तु विभाषाप्रदेशेषु

विरोधिकोट्यन्तरस्यानुपादानादप्रतिपत्तिरेव स्यात् । न हि स्थाणुर्वेत्येतावतैव कश्चिद्विकल्पं प्रत्येति । अतः सूत्रारम्भः । आरब्धे तु संप्रसारणं भवति न वेति वाक्यार्थेन विकल्पः सिध्यति । संज्ञित्वमपि भावविरोधिनोऽभावस्यैव, न तूभयस्य । तथा च भाष्यम्— 'विध्यनित्यत्वमनुपपन्नं प्रतिषेधसंज्ञाकरणात् । सिद्धं तु प्रसज्यप्रतिषेधात् । सिद्धमेतत् । कथम्? प्रसज्यप्रतिषेधात् । विधाय किंचिन्नवेत्युच्यते तेनैवोभयं भविष्यति' इति । 'उभयोः संज्ञा यथा स्यात्' इत्यादिभाष्यं त्वेकदेश्युक्तिः । भाष्यकारस्तु 'मेध्योऽनड्वान् विभाषितः' इत्यादौ कोट्यन्तरानुपादानेऽपि अनित्यत्वप्रतीतेः स्वातन्त्र्येणानित्यत्वे वादिशब्दानां शक्तिमङ्गीकृत्य सूत्रं प्रत्याचख्याविति वदन्ति । **स्वं रूपं शब्दस्य** ॥ कल्पितान्वयेति । परमार्थतोऽखण्डपदस्फोटस्य वाक्यस्फोटस्य वा वाचकत्वेन तत्र च प्रकृतिप्रत्ययाद्यन्वयव्यतिरेकौ कल्पितौ, तस्य निरवयवत्वादिति भावः ॥ अभिव्यक्तेति । त्रयाणां व्यावर्त्यानि 'द्रोणपर्वत—' इति सूत्रे मूल एव स्फुटीभविष्यन्ति ॥ न तु वर्णग्रहण इति । 'अकोः' इति प्रतिषेधश्चात्र गमकः ॥ प्रकारतया भासमानस्येति । 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते' इति वचनात् स्वपर्यायशब्दान्तरजन्यशाब्दबुद्धौ व्यभिचारवारणायाव्यवहितोत्तरत्वसंबन्धेन कारणवैशिष्ट्यस्य घटादिपदजन्यतावच्छेदककोटौ निवेशे गौरवाच्च शब्दस्य प्रकारतया भानमभ्युपेयम् ॥ ज्ञापकपक्षेऽपीति । षान्तस्य षट्संज्ञाकरणं ज्ञापकमिति पक्षेऽपीत्यर्थः ॥ असार्वत्रिकत्वादिति । अत्र प्रमाणं कारकप्रकरणे मूले वक्ष्यति । तत्र चोपपादयिष्यामः ॥ **येनविधिस्तदन्तस्य** ॥ परश्च पुंयोगादिति पाठः । 'परश्च' इति सूत्रे भाष्ये बभ्रोरपत्यमित्यर्थे बाभ्रव्य इत्येव साधुः, न तु शक्त्या लक्षणया वा बभ्रुरित्युक्तम् । हरिरप्याह— 'सोऽयमित्यभिसंधात्तद्धितेन विना यदि । बभ्र्वादयः प्रसज्यन्ते नापत्ये नियमो भवेत्' इति । 'पुंयोगात्—' इति भाष्येऽपि प्रष्ठादिशब्दानां प्रवृत्तिनिमित्तस्य प्रस्थानकर्तृत्वादेः प्रायेण पुंधर्मत्वात्स्त्रिया वृत्त्यभावात्संबन्धित्वविवक्षायाम् 'तस्येदम्'

इत्यणो लुग्वक्तव्यः । ततश्च स्त्रीवृत्तित्वात् ङीष् । न ह्यन्तरेण तद्धितस्य लुकं परार्थे शब्दो वर्तत इत्युक्तम् । लक्षणया तद्धितान्तार्थे प्रष्ठादिशब्दानां साधुत्वे तु तदसंगतिः । एवं प्राचां मतं दूषयित्वा स्वमतमुपन्यस्यति— करणस्येत्यादिना ॥ अन्येन चेत्यादि । अन्यस्येति संबन्धसामान्ये षष्ठी । विधिरिति भावे किः । कर्मणोऽध्याहारः । विधानं चाज्ञातज्ञापनम् । यद्यपि नोक्तविधौ इतरव्यावृत्तिजनकः, तत्र तस्यानुपयोगात् । तथापि संबन्धिविशेषसंबन्धितया कस्यचित्कर्मणो ज्ञानरूपे विशिष्टविधावुपयोगात्तस्य तत्त्वम् । तथा च 'अचो यत्' इत्यादौ धातुविशेषसंबन्धितया यतो ज्ञानम् अच्करणकमेव, न धातुकरणकम्; न हि हलन्तेष्वधातुत्वम्, येन धातोरित्युक्त्या तद्व्यावृत्तिः स्यात् । यद्यपि विशेष्यस्यापि धातोरित्यस्याधात्वज्व्यावृत्तिः संभवति; तथापि तदन्तविध्युत्तरकालिकसंभावितेतरव्यावर्तकमेवात्र विवक्षितम्; तच्च नात्र । ननु 'समासप्रत्ययविधौ—' इत्यस्य विशेषणविशेष्यभावव्यत्यासतात्पर्यग्राहकत्वस्य वक्ष्यमाणस्यासंगतिः, नडाद्यन्तत्वस्येतरव्यावर्तकत्वसंभवेन विशेष्येणापि तेन तदन्तविधिप्रसङ्गादिति चेत्, न; प्रातिपदिकादित्यादेस्तत्तद्विधावुपात्तनडादिद्वारैव व्याख्यानादिना विधेयसंबन्धाङ्गीकारेण साक्षात्तत्संबन्धिविधेरभावेनादोषात् । प्रकृते च अन्तरङ्गत्वात्साक्षादेव संबन्धो विवक्षितः । न ह्यत्र फगादिः साक्षात्प्रातिपदिकसंबन्धी, येनान्यस्येत्युपादित्ससि । यद्यपि 'श्वयुव—' इत्यादौ अन्नन्तश्वाद्यन्तभस्येत्यर्थः सिद्धान्ते संमतः । तत्र त्वदुक्तरीत्या अन्नन्तांशे तदन्तविधिर्दुर्लभः, तथापि यः संबन्धी येन करणेन विवक्षितः, तत्करणमद्वारीकृत्य विधेयसंबन्धित्वं विवक्षितमिति निष्कर्षान्न कश्चिद्दोषः । नापि इको यणित्यादौ तदन्तविधिप्रसङ्गः, स्वात्मकसंबन्धिविशेषसंबन्धितया यणो ज्ञाने स्वस्याकरणत्वात् । अचस्तत्करणत्वेऽपि असमानाधिकरणत्वान्न तदंशे तदन्तविधिः । एवं च उक्तयुक्तिभिर्विशेषणमेव यच्छब्दार्थः फलतीत्यभिप्रेत्योक्तं प्राक्— 'विशेषणमेवात्र करणतृतीयान्तेनोच्यते' इति । अन्येन चेत्यादिभाष्याक्षरैः सूत्राक्षराणि तु इत्थं प्रणेयानि । तदन्तस्येति संबन्धसामान्ये

षष्ठी । तद्बलेन च यस्येति संबन्धसामान्यार्थकषष्ठ्यन्तं कर्म चाध्याह्रियते । तथा च यत्करणको यत्संबन्धी कार्यस्य विधिः, स तदन्तस्य तस्य बोध्य इति ॥ यथा चैत्रस्येति । चित्राजातव्यक्तिविशेषसंबन्धितया तत्स्वामिकैर्हस्त्यश्वादिभिरितरव्यावृत्तिपूर्वकं संग्रामं बोधयतीत्यर्थः ॥ तयोरिति । उक्तयुक्त्या यस्य कार्यम्' तस्याकरणत्वम्; यस्मिन्परतः, तस्य तु कथमकरणत्वमिति चिन्त्यमेतत् । किं चैवम् 'रात्रेः कृति—' इत्यादौ तदन्तविध्यनापत्तिः । न च 'इष्टकेषीक—' इत्यादावपि कथं तदन्तविधिरिति वाच्यम्, अन्यस्येत्यनेन व्यावृत्तिसंबन्धिविशेषणस्याकरणत्वेऽपि तद्व्यावर्तकत्वेन विवक्षितस्याकरणत्वे मानाभावादित्युक्तत्वात् । इको यणित्यादौ तदभावस्तु उक्तयुक्त्यैव ॥ उपलक्षणमिति । इदमपि चिन्त्यम्, पञ्चम्यन्तार्थस्येव सप्तम्यन्तार्थस्यापि संबन्धसामान्यषष्ठ्यन्तान्यस्येत्यनेनैव संग्रहसंभवात् ॥ अन्तरङ्गत्वादिति ॥ एतेन यस्मिन्परतस्तस्याकरणत्वमित्यंशे हेतुरुक्तः । अत्रेदं चिन्त्यते— 'येन विधिः—' इत्यस्य 'अलोऽन्त्यस्य' इत्यादिवत्परिभाषात्वमेव, न संज्ञासूत्रत्वम्, वृद्धिरादैजित्यादाविव सामानाधिकरण्याभावेन 'स्वं रूपं शब्दस्य—' इत्यादाविव बोधकशब्दाभावेन च संज्ञासंज्ञिभावस्य प्रत्ययासंभवात् । तदन्तस्येति षष्ठी तु संबन्धसामान्ये विधिशब्दार्थान्वयिनी । किंचास्य संज्ञासूत्रत्वे लाघवात् 'विशेषणं तदन्तस्य' इत्येव वदेत् । किं चैवं 'उतश्च प्रत्ययात्—' 'त्रिचतुरोः—' इत्यादौ स्त्रियामित्यादेः श्रुतसंबन्धानुपपत्तिः, पदार्थैकदेशत्वात् । परिभाषात्वे तु नायं दोष इति स्फुटमेव । न च तत्र अनुभूतविशेषणेनैव तदन्तविधिः, विशेषणान्वयाग 'स्वं रूपम्—' इति शास्त्रेण 'प्रत्ययः' 'तपरः—' इत्याभ्यां च अर्थविशेषे शक्तिग्रहणस्यावश्यकतया पुनरर्थान्तरे शक्तिग्रहायोगादिति दिक् । एवं प्रत्ययग्रहणे तदन्तविधिरप्यपूर्व एव । अत एव 'अप्रत्ययः' 'सप्तमीस्थम्' 'कृत्तद्धित—' इत्यादौ विशेष्यं विनापि तदन्तविधिः । न हि तत्रापि शब्दस्वरूपं विशेष्यं संभवति, असामर्थ्येन समासानापत्तेरिति ॥ तस्य चेति पाठ्यमिति । ननु व्यपदेशिवद्भावेन सिद्धिरिदं व्यर्थम् । किं च पञ्चत्रपुणीत्यादौ इकोऽपि

नुमापत्तिः । 'सुप्तिङन्तम्—' 'सन्यङोः' इत्याभ्यां केवलस्यापि पदत्वाद्यापत्तिश्चेति चेत्, न; प्रत्ययविधौ व्यपदेशिवद्भावोऽप्रातिपदिकेनेति निषेधेन रोण्यन्ताद्विहितस्याणः रौण इत्यत्र प्रवृत्तये तदावश्यकत्वात् । 'सुप्तिङन्तम्—' इत्यादौ प्रत्ययग्रहणपरिभाषोपस्थित्या ससहायस्य केवलस्य अतथात्वादेव न दोषः । यस्य येन विधिः, तदन्तस्य तदात्मकस्य तस्य च स बोध्य इत्यर्थेन पञ्चत्रपुणीत्यादौ न दोषः, उकारस्यानङ्गत्वात् । केचित्तु— शास्त्रस्य लोकव्यवहारात्प्रबलत्वेन व्यपदेशिवद्भावाप्रवृत्त्या तस्य चेत्यावश्यकमिति वदन्ति ॥ अनुवाद इति । एतच्च सर्वम् 'अनुपसर्जनात्—' इति सूत्रे निरूपयिष्यते । वर्णानां देशतः कालतश्च व्याप्त्या अभावासंभव इत्यत आह— उच्चारणेति ॥ अनन्तरकालिक एवेति । न तु पूर्वकालिकः; तेन राम इत्यादावादिरेफस्य न विसर्गः ॥ वर्णवदिति । देशतः कालतश्च व्याप्तस्य दैशिककालिकक्रमासंभवात् अनित्यत्वेऽपि उच्चरितप्रध्वंसित्वेन तदसंभवात् बौद्धस्यैव तस्यावश्यकत्वमिति भावः । वर्णाद्वर्णान्तरोच्चारणे प्रतिवर्णं विरामसद्भावात् सर्वत्रावसासंज्ञाप्राप्त्या संहितासंज्ञाप्यनवकाशेति चेत्, न; विरामपदसामर्थ्येन सर्वथा वर्णान्तरानुच्चारणस्यैव तेन विवक्षितत्वात् ॥ विषयभेदेऽपीति । इदं चिन्त्यम्, आकडारीयसंज्ञयोः समविषयत्व एव बाध्यबाधकभावाङ्गीकारात्; अन्यथा राजपुत्रेणेत्यादौ पूर्वपदे नलोपाद्यनापत्तेः, नदीगुरुसंज्ञयोः समावेशापत्तेश्च । किं च अशब्दस्य संबुद्धौ पूर्वपदेन संहिताया अविवक्षायां वाक्यान्ते स्थितस्य अ इत्यस्यानुनासिकत्वार्थमवसानसंज्ञावश्यकत्वेन तत्र तस्याश्चारितार्थ्यम् । न च तत्रापि संबुद्धौ सत्यां यथोद्देशे संहितासंज्ञायाः सत्त्वेन तदनवकाशत्वमिति वाच्यम्, तल्लोपोत्तरं संनिकर्षस्य संज्ञिन एवाभावेन संहितासंज्ञाया अप्रवृत्त्या तच्चारितार्थ्यसंभवात् । भाष्येऽपीत एवारुचेः 'एवं तर्ह्यनवकाशावसानसंज्ञा संहितासंज्ञां बाधिष्यते' इत्युक्त्वा, 'अथ वा संहितासंज्ञायां प्रकर्षगतिर्विज्ञास्यते— साधीयो यः परः संनिकर्षः । कश्च साधीयः 'यः पूर्वपरयोः' इत्युक्तम् ॥ स्वशास्त्रेति । न चैवं गुरुलघुसंज्ञयोर्बाध्यबाधकभावानापत्तिः, 'दीर्घो लघोः' इति सूत्रे लघुग्रहण-

सामर्थ्येन बाध्यबाधकभाव इत्याशयात् ॥ सत्यामिति । उपलक्षणमिदम्, रामादित्यादौ द्वित्वचर्त्वयोः प्रवृत्तेः; अन्यथा अवसानसंज्ञया संहितासंज्ञाया बाधात्संहितायां विहितं द्वित्वं न स्यादिति दिक् ॥ **सुप्तिङन्तं पदम्** ॥ शब्दरूपमिति यद्यप्युपस्थितस्य तदादेरित्यस्य विशेष्यत्वं संभवति; तथापि यत्र 'स्त्रीप्रत्यये च—' इत्यादिना तदादिनियमो निषिद्धः, तत्रेदं बोध्यम् ॥ व्यभिचारेणेति । ननूत्पत्त्युत्तरं व्यभिचारेऽपि उत्पत्तिसमये तेनाव्यभिचारात्त-त्संभवः । यथा उत्पत्तिकालावच्छेदेन गन्धव्यभिचारिणा पृथिवीत्वेन तदाक्षेप इत्यत आह— आक्षिप्तस्येति । वृत्त्युपस्थितस्यैव तत्र भानमिति भावः । शब्दाक्षेपस्तु न संभवति, तेन विनापि प्रत्ययसत्त्वसंभवेन तस्य तदनुपपादकत्वात् ॥ गौरी ब्राह्मणितरेति । स्थितिप्रदर्शनमेतत्, न तु परिनिष्ठितम्; गौरत्वप्रवृ-त्तिनिमित्तकोऽयं भाषितपुंस्क इति भावः ॥ एतन्निषेधेति । नन्वयं निषेधः 'घरूप—' इत्यादौ तदन्तविधिद्वयाभावाय । किं चोत्तरपदाधिकारे तदन्तविध्य-भावात् केवलस्यैव ग्रहणार्थः स इति चेत्, न; एतस्य प्रत्ययग्रहण इत्यस्य यौ निषेधौ 'प्रत्ययग्रहणे चापञ्चम्याः' 'उत्तरपदाधिकारे—' इति, तत्सामर्थ्यात् तद्बलादित्यर्थेनादोषात् । नन्वेतन्निषेधद्वयाविषये 'सर्वनामस्थाने च—' 'सुपि च' 'चतुरः शसि' 'रोः सुपि' 'यचि भम्' इत्यादौ कुतो न तदन्तविधि-रिति चेत्, न; लिङ्गग्रहणेन सामान्यत एव सप्तम्यन्ततयोपात्तप्रत्यये तदन्त-विध्यभावबोधनात् । उत्तरपद इति तूपलक्षणम् । केचित्तु 'सुपि च' इत्यादौ सुपि परत इत्युक्तौ कस्मात्परत इत्यवध्याकाङ्क्षायां पञ्चम्यन्तस्यान्वयेन 'प्रत्ययग्रहणे च—' इति निषेधादेव न दोषः । न चैवम् उत्तरपदाधिकार इति व्यर्थम्, तस्य सौत्रनिषेधार्थत्वात् । 'प्रत्ययग्रहणे च—' इति तु वाचनिक-स्यैव निषेधकमिति वदन्ति ॥ अनुवृत्तेरिति । उपस्थितेरित्यर्थः । प्रसङ्गादाह— इयानिति ॥ अशास्त्रीयस्यापीति । तदादिपदोपस्थापनस्य विशेषणतदन्तपरत्वस्य च शास्त्रविहितत्वेऽपि लक्ष्ये तदादित्वं तदन्तत्वं च न तेन विहितम् । तदेव न व्यपदेशिवद्भावसाध्यम् । यथोद्देशे स्यानित्यत्र प्रातिपदिकत्वमुक्तातिदेशं

विनापि सुसाधमत आह— अत एवेति ॥ ससहाये इति । तत्त्वं च मुख्यव्यप-
देशप्रयोजकधर्मवद्द्वितीयरहितत्वम् । धर्मश्च शास्त्रोपात्त एव । तेन हरीत्यादावी-
कारस्य द्विवचनस्य ईदन्तत्वेऽपि कुलेटेत्यादौ पूर्वपदान्त्यस्य कुरुते देवदत्त
इत्यादौ तङोऽकारस्य स्वाद्यवयवकत्वेऽपि हरिष्वित्यादौ सोर्न स्वनिरूपितमन्त्य-
त्वम्, तत्र द्विवचनात्मनेपदादीनामवयविनामिव 'सुप्तिङन्तम्—' इति सूत्रे
सुपस्तादृशस्यानुपादानात् । भवतीत्यादौ यद्यपि शप्यङ्गत्वे तदादिर्मुख्यः संभव-
तीति भूमात्रस्याङ्गत्वं न प्राप्नोति; तथापि शप्परकस्तदादिर्न मुख्योऽन्य
इति न तत्र दोषः । नन्वेवमपि दधीत्यादौ यणापत्तिः । प्रगणय्येत्यादावसि-
द्धत्वेऽपि लघुपूर्वात्परत्वाक्षत्या असिद्धवत्सूत्रस्थभाष्यासंगतिश्चेति चेत्, न;
अवयवत्वतद्व्याप्यान्यतरस्य उक्तातिदेशसाध्यत्वेऽपि पूर्वपरदेशवृत्तित्वस्य लो-
केऽदृष्टस्य तदसाध्यत्वात् । अत एव हर्यादौ नादन्तत्वम् । न ह्यपुत्रे
सपुत्रत्वमिष्टमिति दिक् ॥ तदर्थादिति । यथाश्रुतार्थत्वे तु कुरुते इत्यादौ
एत्वानापत्तिः ॥ **हलोऽनन्तराः** ॥ अत्रत्यभाष्यस्वारस्येन प्रत्येकं समु-
दाये च वाक्यपरिसमाप्तौ लक्ष्यानुरोधे तस्यैव व्यवस्थापकत्वालाभादाह—
समुदायस्यैवेति ॥ इत्युक्तेश्चेति । इदं चिन्त्यम्, अनन्तरा ब्राह्मणा भोज्यन्ता-
मित्यादाविवानन्तराणामनेकेषां हलां प्रत्येकं संज्ञाया अनन्तरपदेनावारणात् ।
दृषत्तीर्णेत्यादौ आनन्तर्योपलक्षिते केवले दृषदित्यत्र दकारे तत्संज्ञावारणायाह—
तस्येति ॥ अन्वर्थेति । अर्थं योगार्थमनुगता संज्ञा इत्यर्थः; तद्बलादेव संयोग
इत्यस्यावृत्त्योद्देश्यविधेयसमर्पकत्वं बोध्यम् । यद्वा प्रदेशे पङ्कजादिपदादिव
संयोगपदादपि योगार्थविशिष्टस्यैवोपस्थितत्वात्तादृशस्यैव संज्ञित्वकल्पना न्या-
य्या, नेतरस्य फलाभावात् । ननु हल इत्युक्त्या संयुज्यमानातिरिक्तस्य संयो-
गपदार्थताया असंभवादेवोक्तनियमत्याग इत्यत आह— तद्घटितेति । उक्त-
नियमबलादेव हल्पदं तद्घटितपरं स्यादिति भावः । वस्तुतस्तु व्रीहयः संयु-
ज्यन्ते अस्मिन् राशावित्यादौ उक्तनियमस्य व्यभिचारेण हल इत्युक्त्या च

तेषामेव संज्ञित्वौचित्यात् कैयटोक्तमेव सम्यक् । ननु हल इति बहुवचननिर्देशात

द्वयोः संयोगसंज्ञा न स्यादत आह— सौत्रमिति । इदमपि चिन्त्यम्, जातौ बहुवचनस्य कैयटेनोक्तत्वात् । वस्तुतः 'सर्वादीनि—' 'ते तद्राजाः—' इत्यादिष्विव 'सूत्रे लिङ्गवचनमशिष्यम्' इति परिभाषया बहुत्वस्याविवक्षणान्न दोषः ॥ हलश्चेति । हल्पदात् 'स्वरितात्संहितायाम्—' इति सूत्रस्थभाष्यप्रामाण्येन द्वित्वबहुत्वोभयप्रकारको बोधः; परत्वाद्बहुवचनमिति भावः । यद्यपि बहूनां समवाये द्वयोः संयोगसंज्ञाभावस्य वक्ष्यमाणत्वात् हलश्चेति व्यर्थम्, तथापि बहुवचनोपपत्त्यर्थं तथा प्रदर्शितमित्यदोषः ॥ फलाभावादिति । परे तु मङ्क्त्वादौ सलोपाय बहूनामपि सा । न च सनयोः संयोगमाश्रित्य सः, पयःस्थितिरित्याद्यनुरोधेन झलादौ सङ्घ्येव तद्विधानात् । अत एवात्र सूत्रे भाष्ये— 'अथवाऽविशेषेण द्वयोर्बहूनामपि' इत्युक्तमुपसंहारे । न च 'परश्च' इति सूत्रे काष्ठशक् स्थातेति फलमुपन्यस्य अनभिधानेन सङ्गीत्यस्य निष्फलताया भाष्ये उक्तत्वेन नैतस्याभिधानमिति वाच्यम्, तत्रैव विवरणे शिथिलक्लिष्टानेकयुक्तिभिर्वार्त्तिकखण्डनस्यैकदेशयुक्तित्वमित्युक्तत्वेन तद्बलेनानभिधानस्यानौचित्यात् । अत एव 'रणे रामः स्थाता—' इत्यादिप्रयोगाः संगच्छन्ते । अत एव च 'लोपश्च इति द्विशकारको निर्देशः' इति भाष्यमुपपद्यत इत्याहुः ॥ कुत्वमिति । परे तु 'अल्पाच्तरम्' 'कथमज्ग्रहणेषु' इत्यादिप्रयोगादर्थान्तरसंनिधिसंदेहजनकसंधिकार्याप्रवृत्तेर्ज्ञापनान्नात्र कुत्वम् । 'अचोऽक्षु' इत्यत्र तु अच इति प्रक्रमान्नार्थान्तरप्रतीतिरिति कुत्वम् ॥ तितउ देवेति । नन्वनन्तरा इत्युक्त्या अचां हलां वा विजातीयाव्यवहितानामेव संयोगसंज्ञेति अकारोकारयोः संयोगसंज्ञायां ततः पूर्वस्याचोऽभावात् कथमत्र प्लुत इति चेत्, न; प्रत्येकं संयोगसंज्ञेति पक्षे दोषाभिधानात् । समुदायस्येति पक्षे तु संयोगान्तलोप आपादनीयः, 'झलो लोपः सः' इति कल्पेऽपि प्रतिषेधारम्भैकवाक्यतायै वाक्यभेदस्य सिद्धान्तयिष्यमाणतया तदापादनसंभवात् ॥ पनसमिति । झप्समित्यपपाठः । झलन्तसंयोगाद्योरित्यर्थे तु पनसादित्यादि प्रत्युदाहार्यम् ॥ भूतपूर्वेति । यत्तु पाठकः— समकालप्रवृत्तया गुरुसंज्ञया लघुसंज्ञायाः बाधेऽपि

अन्तरङ्गायास्तस्या बाधे मानाभावः, 'अपवादो यद्यन्यत्र—' इति न्यायादिति; तन्न, भित्तिसदृशेत्यादौ भिदेरिकारस्य प्लुतानापत्तेः जक्षतीत्यादौ अन्तबाधेन कृतार्थत्वाद्भावस्य दधतीत्यादावन्तरङ्गेण तेन बाधापत्तेः । तस्मात् व्याश्रय एव स न्याय इति दिक् ॥ संधिकार्येति । सौत्रेत्यपि पूरणीयम्; तेन टिसंज्ञाया अनुक्तत्वेऽपि न दोषः ॥

इति

श्रीमदात्रेयवंशपयःपारावारराकासुधाकरेण सकलकलापारदृश्वना श्रीनीलकण्ठान्तेवासिना श्रीराघवेन्द्राचार्यविदुषा विरचितायां चन्द्रिकाभिख्यायां शब्देन्दुशेखरव्याख्यायां संज्ञाप्रकरणं समाप्तम् ।

